# इन्दिरागान्धीचरितम्

डॉ० सत्यव्रतशास्त्री
दिल्लीविश्वविद्यालये पण्डितमनमोहननाथदरसंस्कृतपीठाचार्यः
कलासङ्कायाध्यक्षपूर्वश्च

प्राक्कथनलेखकः
श्रीदेवकान्त बरुआ
भारतीयराष्ट्रियकांग्रेसाध्यक्षः

भारतीय विद्या प्रकाशन
दिल्ली वाराणसी
(भारत)

# INDIRA GANDHI-CARITAM

[A Biography of Prime Minister
Indira Gandhi in Sanskrit poetry]

**SATYA VRAT SHASTRI**
Pandit Manmohan Nath Dar
Professor of Sanskrit and
Ex-Dean, Faculty of Arts,
University of Delhi.

FOREWORD BY

**SHRI D.K. BOROOAH**
President, Indian National Congress

BHARATIYA VIDYA PRAKASHAN
Delhi Varanasi
INDIA

## FOREWORD

There is a regular tradition in Sanskrit Kāvyas and historiography that biographies of eminent persons have been written in verse. It serves two purposes. Besides providing aesthetic enjoyment to connoisseurs they serve as a record of the activities of those persons. They thus unfold not only the history of those persons but also the condition of the times in which they lived. In those parts of India where the tradition of historical writings did not develop, unlike Kashmir where Kalhaṇa's *Rājataraṅgiṇī* and its subsequent supplements came into being, this type of biographical writing provided a lot of historical facts and information to fill up the gaps in Indian history. Bāṇa's *Harṣacarita*, Bilhaṇa's *Vikramāṅkadevacarita*, Padmagupta's *Navasāhasāṅkacarita*, to name only a few, are such works of the older period. In more recent times Shri M.S. Aney made a similar attempt. His *Tilakayaśorṇavaḥ* is a biography of Shri Bal Gangadhar Tilak which has much to tell about the events of the contemporary period. In line with the age-old tradition comes the present biography by Prof. Satya Vrat Shastri.

There is a special advantage in writing in Sanskrit. It is a language which in Indian history has survived beyond time and space. The great savant Shri Anundoram Borooah, I.C.S., has the following to say (*Mahāvīracarita of Bhavabhūti*, published in 1877) about it : "To me Sanskrit is dearer than any other language. Its music has charms which no words can express. Its capability of representing every form of human thought in most appropriate language is probably not rivalled, certainly not surpassed, by any other language.

The present work is composed in facile and mellifluous verses marked by spontaneity and sweetness. There is enough of beautiful descriptive poetry in it to appeal to men of taste. It is the first comprehensive life account of Prime Minister Indira Gandhi in Sanskrit verse.

There is a very considerable segment of society in the country even at the moment which knows Sanskrit and can relish its rhythm and cadence. The work aims at providing aesthetic joy to it in addition to making it better informed about the Prime Minister.

Prof. Satya Vrat Shastri, Pandit Manmohan Nath Dar Professor of Sanskrit and Ex-Dean, Faculty of Arts, University of Delhi, has already established himself not only as a well-known scholar but also as a writer of eminence. I feel most happy and proud that the product of my *alma mater*, the Banaras Hindu University, has produced a Mahākāvya in which he has described the life and achievements of one of the greatest women in the world.

**D. K. Borooah**
President,
Indian National Congress.

20 October, 1976

# निवेदनम्

इन्दिरागान्धीचरितं नाम महाकाव्यं विदुषां पुरतः समुपस्थापयन्नहं परमं परितोषमनुभवामि । अनेन चिरचिन्तितो मे मनोरथः परिपूर्णतां गतः ।

महापुरुषाणां चरितानि कीर्तितानि महान्तमामोदं जनयन्ति । आदर्शास्ते जननिवहस्य येन पथा सञ्चरन्ते, यां पद्धतिमङ्गीकुर्वन्ति, यथा वा प्रवृत्तिमन्तो भवन्ति तथैवेतरे प्रवर्तन्ते । ते हि पथिकृतो भवन्ति पथिदर्शाश्च । आभणति च लोकः—'महाजनो येन गतः स पन्था' इति । महाजनानुसृतपथस्तेषां चरितादेव सुज्ञानो भवितुमर्हति, अत एव तेषां चरितकीर्तने विदुषां प्रवृत्तिः । एतदर्थकश्चैवायं प्रकृतो मे यत्नः ।

भारतदेशस्य प्रधानमन्त्रिणी श्रीमती इन्दिरागान्धी कोटिशो जनानां पूजनीयाऽभिनन्दनीया च । अद्य सार्धाणि दशवर्षाणि देशमिमं शासत्यास्तस्याः । विशालोऽयं देशः, आसेतुहिमाचलं विस्तृतः, षष्ट्या कोटिभिर्जनैरध्युषितः, क्रीडास्थली नैकेषां धर्माणां, सम्प्रदायानां, विश्वासानां, दर्शनानां च । वैविध्यमत्र भाषाया, वेषस्य, भोजनपद्धतेश्च । अत्रैकतः सुदीर्घाः शस्यश्यामला भूमयोऽपरतो नानायोजनानि विस्तृता धन्वानः, एकतो वारांनिधिवारिधौता आयतास्तटप्रदेशा अपरतः सततहिमाच्छन्नतुङ्गशृङ्गा नानादिव्यौषधिवनस्पतिवानस्पत्यविभूषिताः शिखरिणः । एतादृशस्य जम्बूद्वीपान्तर्गतस्य भारतभूखण्डस्य महापरिमाणस्याधिकदशानि वर्षाणि सफलं शासनमस्याः कमप्यसाधारणं गुणगरिमाणमाविष्करोति ।

भारतीया जनाः कथं सुखिनो भवन्तु, कथं च दैन्यं दारिद्र्यं वा परिहरन्त्विवतीयमनारतं चिन्तयति । पूर्वं समृद्धेः परं पारमयं देश उपगत आसीत् । अस्मादेव च पृथिव्यां सर्वमानवाः स्वं स्वं चरित्रमशिक्षन्त । परं कालवशात् कष्टामयं दशां प्रपन्नः । सम्प्रति पुनरप्यस्या महाभागाया निर्देशेनात्मान्वेषणाय कृतप्रयत्नोऽतिप्राचीनोऽपि नवीन इव भाति । उद्योगशृङ्खलाऽत्रत्या यन्त्रगृहाणि चात्रत्यानि यत्सत्यं नेत्रयोस्तर्पणानि । परमद्यापि मा जीवन्तः कोटिशोऽत्र जना दिनस्य द्विः पर्याप्तं भोक्तुं न लभन्ते । तेषां दैन्यादुद्धारः समुन्नतिर्वा प्रधानमन्त्रिणी प्रथमं कृत्यमित्यभ्युपैति । एतदर्थमेव तया विंशतिसूत्रात्मक आर्थिकः कार्यक्रम उद्भावितः प्रवर्तितश्च ।

एतादृश्याः पुण्यश्लोकायाश्चरितकीर्तनं पुण्यायैवेति प्रवृत्तिरस्मदीया प्रयोजनवती भवति।

अद्य प्रायेण वर्षमस्मिन्कार्ये प्रवृत्तस्य मम। प्रेरितोऽहं चैतदर्थं ममानुजदेश्येनाचार्यं डा० कुसुमेन। १९७५ वर्षेऽक्तूबरमासस्य तृतीयेऽहनि स सायमस्मद्गृहानुपागात्। तत्र चर्चाप्रसङ्गे च मयोक्तं चिरमद्य काव्यं प्रणीतवतो मे। इदानीं तद्रचनेच्छा मयि भूयोऽपि जागर्ति। तत्र को नाम विषयो भवतु तस्य। तेनोक्तं प्रधानमन्त्रिणीं श्रीमतीम् इन्दिरागान्धीमुद्दिश्यैव काव्यं विरच्यताम् इति। प्रतिश्रुतं च तन्मया तस्मै। परन्तु नेदं सुकरमासीत्। सङ्कल्पशक्तिः पुनः सर्वं साधयतीति तत्प्रभावादेवात्र मया साफल्यमवापि। अद्येषदूनं वर्षं काव्यरचनायां नैरन्तर्येण प्रसृतोऽहं तदद्य परिपूर्णतामुपेतं पश्यामीति परो मे परितोषः।

अस्य काव्यस्यान्तिमे पद्ये यच्छन्दस्तत्स्वतःप्रकाशमेव। नहि तच्छन्दोग्रन्थारूढम्। काऽस्य समाख्या भवत्विति बहु चिन्तयता मयेदमेव निरचायि यद् यन्निमित्तेन काव्यमिदं व्यरच्यत तदाख्ययैवेदं प्रथतामिति। एतन्निश्चयेनेन्दिरेत्येवास्य समाख्या कृतेति विभावयन्तु सुधियः।

हिन्दीमजानतामाङ्ग्लीं च जानतां विदुषां कृत आङ्ग्ल्यनुवादोऽप्यस्य काव्यस्य विधीयते। नातिचिरेण स प्राकाश्यमेष्यति।

काव्यरचनाकालेऽपरेण कनीयोभ्रातृकल्पेन श्रीमदनलालकुमरियाऽभिधेनाप्यहं सुतरामुत्साहमापादितः। तस्यापि प्रबलेयमिच्छावृतत्काव्यमिदं परिसमाप्तिमियादिति। स हि मयि सुतरां स्निह्यति काव्यरचनायां च मामनारतं प्रचोदयति।

काव्यमिदमामूलचूलमालोकितं पितृपादैः परिष्कृतं च। हिन्द्यनुवादोऽस्य विहितः प्रियसुहृदा दिल्लीस्थहिन्दूमहाविद्यालयस्याध्यापकेन डा० जियाललकम्बोजेन। एतदर्थमयं मम सुतरां धन्यवादार्हः। तस्यैव महाविद्यालयस्यापरेणाध्यापकेन बन्धुवर्येण डा० योगेश्वरदत्तशर्मणाऽऽयुष्मता डा० रामशरणशास्त्रिणा चैतद्ग्रन्थमुद्रणकाले बहुविधं मे साहाय्यमाचरितमिति तावपि धन्यौ वदामि।

भारतीयविद्याप्रकाशनसंस्थाया अध्यक्षेण श्रीकिशोरचन्द्रजैनेन महतोत्साहेन कृतिरियं प्रकाशनार्थमङ्गीकृता महच्चात्रार्थे प्रयत्तम्। एवमेव मुद्रकेण श्रीश्यामलालेन यथाशक्ति त्वरिते शुद्धे च मुद्रणे कृतः प्रयासः। उभाभ्यामप्याभ्यां कृतज्ञतां वहामि।

भारतीयराष्ट्रियकांग्रेसाध्यक्षाः सौजन्यमूर्तयो वैदुष्यशेवधयः श्रीदेवकान्त-बरुग्रामहाभागाः काव्यमिदं स्वकैराशीर्वचोभिः सम्भावितवन्त इति सुतरां तैरनुगृहीतोऽस्मि ।

मम सहधर्मचारिणी संस्कृतविदुषी श्रीमत्युषाः ममोत्साहमस्मिन्कर्मणि वर्धितवतीति तस्यामप्यहमधमर्णतां वहामि। यदि काव्यमिदं सदयहृदयेभ्यः सहृदयेभ्यः कलयाऽपि रोचेत, प्रधानमन्त्रिण्या लोकोत्तरेण चरितेन च लोकः प्रेरणां सुपन्थानं च विन्देत तर्हि कृतिनमात्मानं कलयेयेति विनिवेद्य गिरमुपसंहरति

सुरभिः ३।५४ रूपनगरम्, दिल्ली — विदुषामाश्रवः

२८.८.१९७६ — सत्यव्रतशास्त्री

# विषयानुक्रमणी

**सप्तदशः सर्गः** १६७

आगतवत्यां तस्यामन्येद्युरेव पितृष्वसुर्विजयलक्ष्म्या निग्रहणम्—ततस्तस्या लक्ष्मणपुरं प्रति गमनम्—निजिघृक्षितेनापि तत्पतिना नैकानि दिनानि रक्षिणां वञ्चनम्—स्वगृहे तस्या इत्थमेकाकिनीत्वेन स्थितिः—एकस्मिन्दिने ख्रिंग्क्रिश्चियनाख्यस्य विद्यालयस्यच्छात्राणां तदुपसदनं विद्यालयप्राङ्गन एव चिकीर्षिते राष्ट्रध्वजोच्छ्राय-विधौ तदुपस्थितेः प्रार्थनं, तया च तदङ्गीकरणं तत्रोपस्थानं च—केनापिच्छात्रेणोच्छ्रायिते ध्वजे तदुपरि लगुडप्रहारवृष्टिः—तद्धस्ता-द्राष्ट्रध्वजपोतस्ततश्च तत्क्षणमेवेन्दिरया तद्ग्रहणम्—तदुपरि घोरा लगुडप्रहारास्तथापि तया न तन्मोचनम्—तया स्वकुलं चिन्तयित्वा घोरप्रहारपीडासहनं—रात्रौ परैरलक्षिते पत्यौ गृहं समुपागतवति पृष्टवति च तां वृत्तं जातं तया स्वभाववशात्स्वल्पो विरोधोऽजनि रक्षिभिर्ध्वजोच्छ्रायविधिस्तु जात इति कथनम्—क्षतैः पुनर्ज्ञातस-मस्ततत्त्वस्य पत्युः क्रुद्धस्य ततोऽपगमनम्—व्यतीते कस्मिंश्चित्काले तातप्रवृत्तिमाप्य जनेभ्यस्तत्सूचनाय सभासमायोजनायेन्दिरा-विनिश्चयः ।

**अष्टादशः सर्गः** १७७

सभाया आयोजनम्—इन्दिरायास्तत्र भाषणम्—रक्षिणां तां प्रति क्रोधोद्रेकः—एकेनांग्लभटेन तत्र तां प्रति क्रूरभाषणम्—तदैव सभामध्यात्तद्गात्रसम्मर्दनेच्छया फ़ीरोज़गान्धेरुत्थानम्, पत्न्या गर्वेण तद्दर्शनं, तेन चापि तस्याः—तत एकेन भटेनेन्दिराकर्षणं सभास्थैर्लोकैश्चान्यत्राकर्षणं—तेन तस्याः क्षतविक्षतत्वम्—अत्रा-न्तरेऽन्यभटानां तत्रापतनं तां जनेभ्य आच्छिद्य स्ववाहनमारोप्य तया सहान्येषां फ़ीरोज़गान्धिसहचरितानां शतसङ्ख्यकानां नैनीनामके कारागृहे प्रापणम्—तत्र स्त्रीपुंसभेदादिन्दिरायाः फ़ीरोज़गान्धेः पृथगवस्थापनम्—तत्रेन्दिरायाः पितृष्वस्रा विजयलक्ष्म्या सङ्गमनम्—नव मासांस्तस्याः कारागृहेऽवस्थितिस्तदनु शरीरसादवशात् तस्यास्ततो मोक्षः—पुनः स्वास्थ्यलाभे तया पुनरपि स्वदेशकार्यार्थं-मात्मनो व्यापारणम्—महात्मनो गान्धिनस्तस्यास्तत्पितुरन्येषां लक्षशो जनानां च प्रयत्नेन वैदेशिकं शासनं प्रति दवाग्नेरिव लोकविरोधस्य प्रसरः—नात्रत्या जनाश्चिरमस्माभिः स्ववशे स्थापयितुं शक्या इति वैदेशिकानां मतेजागरणम्—तथापि मिथो

विवादो भारतीयेषु जायेतेति वक्राया बुद्धेस्तेषु प्रवृत्तिस्तया च मौहम्मदेषु बुद्धिभेदस्य जननम् ।



तेन मौहम्मदाः पृथक् स्वराष्ट्रमवाञ्छन् यत्र तेषां बहुसंख्या—मुहम्मदालिजिन्ना तेषामत्र विषये नेता—१५ अगस्त १९४७ वर्षे आङ्गलैर्भारतशासनस्य भारतीयेभ्यः समर्पणम्—तस्मिन्नेव दिने मौहम्मदानां कथनान्नूत्नस्य पाकिस्थानाख्यदेशस्यापि जन्म—पाकिस्थाने मुहम्मदानुगानामेव भवतु वास इतरधर्मावलम्बिनो भारतमेव यान्त्विति तत्रत्यलोकानां मतिः ।



तेषां हिन्दून् प्रति बह्वन्याय्याचरणम्—तद्गृहेष्वग्निदानम्—तद्धिंसनादि च—हिन्दुभिरपि प्रतिचिकीर्षद्भिस्तथैवाचरणम्—पाकिस्थानात्प्राप्तानामकिञ्चनानां नैकेषां शरणार्थिनां स्वगृहमुपेतानां भोजनादिसर्वविधसंविधानकमिन्दिरायामधि पितृगृहसंविधानकं च—तस्याः सर्वथा तातसुखचिन्ता—आत्मार्थमुच्चतरपदपरिहारः—सुहृत्प्रेरणया केवलया तया कांग्रेसाध्यक्षपदस्वीकारः सम्यक् तन्निर्वाहश्च ।



पितुः स्वर्लोकगमनम्—कामराजादिप्रयत्नाल् लालबहादुरशास्त्रिणः प्रधानमन्त्रिपदग्रहणम्—इन्दिरायास्तदा सूचनाप्रसारमन्त्रालयमन्त्रिणीपदे नियुक्तिः—लालबहादुरशास्त्रिण उपरामः—इन्दिरायाः प्रधानमन्त्रिणीति सर्वानुमत्या वरणम्—ज़ाकिरहुसैनाख्यराष्ट्रपतिनिधने कांग्रेसनेतृभिः सञ्जीवरेड्डीत्याख्यस्य नाम्नो राष्ट्रपतिपदार्थं प्रस्तुतिः—उपराष्ट्रपतिना गिरिणा नेदं परम्परानुगुणमिति स्वस्यार्थे तत्पदप्राप्तौ प्रयत्नः—तस्येन्दिरया समर्थनम्—अदीर्घदर्शिभिर्वृद्धैश्च तदानीन्तनकांग्रेसनेतृत्वं न सम्यङ् निर्वोढुं पार्यत इतीन्दिरया नूत्नकांग्रेससङ्घटनम्—नैकैर्जनैस्तत्समाश्रयणम्, प्रत्नकांग्रेसापेक्षया नूत्नकांग्रेसस्यैव वैशिष्ट्यम् ।



इन्दिरायाः शिशुप्रियत्वम्—राजीवस्य जन्म—तस्य राजीवसंज्ञाया हेतुः—सञ्जयस्य जन्म—ताभ्यां सममिन्दिरायाः समययापनम्—तयोर्यौवनम्—तयोः स्वयंवृताभ्यां क्रमेणैतालिदेश्यसोनियाशिष्यवंश्य-

मेनकाभ्यां समं परिणयः—राजीवस्य राहुल इति प्रियङ्केति चाप-त्ययुगम्—पितुः, सुखसम्पादनायेन्दिरायाः पतिं विहाय तद्गृहा-श्रयणम्—तथाऽपि हृदयेन पतिचिन्ता—पत्युर्लोकसभासदस्यत्वेन लक्ष्मणपुरतो दिल्लीपुरीसमागमनं सदस्यानां कृते निर्मितेषु गृहेष्वेक-तमस्मिन्वासः—काले काले जवाहरलालगृहमुपेत्य पत्न्या पुत्रकाभ्यां च तस्य सङ्गः, परं भूयांसं कालमेकान्तवास एव, तेन शरीरसादः—तेन हृद्रोगः—इन्दिरया तदुपचारप्रयत्नः—तस्य कश्मीरान् प्रति नयनं स्वास्थ्यलाभे च ततः प्रत्यागमनम्—केनचित्कालेन पुनस्तस्य हृद्रोगास्कन्दो निधनं च ।

त्रयोविंशः सर्गः २३३

गिरिविजयस्तद्धेतुक एवेति जनैस्तत्प्रभावस्य सम्यक् परिचयस्तद्व-श्यत्वं च—पञ्चवर्षशासनानन्तरं पूर्वदिशि महत उपद्रवस्य प्रारम्भः—पाकिस्थानाङ्गभूते पूर्वबङ्गे मुजीबस्य नेतृत्वे पश्चिमस्था जना बङ्गात्समृद्धिं हरन्ति मातृभाषां बाङ्गीं चापास्योर्दूमारोपयन्ति तत्रेति महान् क्षोभः—लोकसभानिर्वाचने पूर्वबङ्गीयस्यावामिलीगस्य सर्व-स्मिन् पाकिस्थानदेशे बहुमतम्—परं तदानीन्तनेन तद्राष्ट्रपतिना यह्याख्येन तस्मै स्वदेशे शासनाप्रदानम्—मार्चमासस्य त्रयोविंशे दिने च रात्रौ सैनिकैस्तदाज्ञया तदाक्रमणम्, घोरं च जनानां कदनं, कुल-स्त्रीणां दूषणं, बुद्धिजीविनां विशेषतो निबर्हणमित्यादिकस्या-नल्पस्यानिष्टस्याचरणम्—तेन क्षुभिततरैरवामिलीगनेतृभिः पूर्ण-स्वातन्त्र्यस्योद्घोषणम्—जनानां स्वरक्षार्थं भारतागमनम्—शिष्टै-स्तत्रस्थैर्मुक्तिवाहिनीत्याख्यां वाहिनीं घटयित्वा पाकिस्थानशासनस्य प्रतिरोधः—भारतमुपेतानां शरणार्थिनां कोटिसङ्ख्या—पाकिस्था-नप्रतिरोधे भारतसाह्यमिति कुशङ्कया यह्यया भारताक्रमणम् ।

चतुर्विंशः सर्गः २४६

पूर्वस्यां दिशि पश्चिमायां च भीषणः सङ्गरः—तत्र भारतस्य विजयः—लक्षसंख्यैः पाकिस्थानसैन्यैः ढाकापुर्यां मैदानाख्ये स्थान आत्मसमर्पणम्—विजयानन्तरं शिमलासम्मेलनम्, तत्रेन्दिरया पाकि-स्थानप्रधानमन्त्रिणा भुट्टोऽभिधेन चान्योन्यवार्तयैव मिथः सङ्घर्षाणां शमनं भवत्विति सिद्धान्तोपगमः, परस्परेण विजिताया भुवः प्रत्यर्पणं, भारतेन निरुद्धानां लक्षसङ्ख्यानां पाकिस्थानसैनिकानां स्वभुवं प्रति प्रतिप्रेषणं च—उभयोर्देशयोर्वाणिज्यादिसम्बन्धस्य दूतसम्प्रेषणादेः

: १ :

(वसन्ततिलकावृत्तम्)

यस्या ध्रुवं विविधचारुविचारवीचि-
व्यावल्गितो लसति मानसराजहंसः ।
या चापि दिव्यधिषणा परिकल्पनाभिः
स्वाभिः करोति धिषणं सुतरामधस्तात् ।।

(उपजातिवृत्तम्)

: २ :

नेत्री जनानां हृदयस्य जेत्री
भेत्त्री रिपूणामपि दुर्मदानाम् ।
सौम्याकृतिः सौम्यगुणाभिगम्या
'यत्राकृतिस्तत्र गुणा वसन्ति' ।।

: ३ :

देशो मदीयः सुतरां समृद्धो
भवेदितीच्छा परमा यदीया ।
न कोऽपि दीनो न च वा दरिद्रो
न व्याधितो वा न च पीडितः स्यात् ।।

: ४ :

सर्वेऽत्र सम्भूय सुखं वसन्तु
प्रियं वदन्तु प्रियमाचरन्तु ।
न विग्रहो वा कलहो भवेद्वा
स्याद् भारतं नन्दनतुल्यरूपम् ।।

: ५ :

इत्येव निध्यानपरा ह्यजस्रं
लोकेन सोत्कण्ठमुदीक्षिता च ।
कृत्स्नं स्वदेशं विनिबध्य सूत्रे
याऽभेदरूपे सुतरां चकास्ति ।।

: ६ :

(मालिनीवृत्तम्)

सकलभुवनमध्ये कीर्तितस्पृह्यकीर्ति-
र्निजगुणगणशोभाप्रोल्लसच्चारुरूपा ।
दिवसकर इवोग्रं स्वं प्रतापं दधाना
दिशि दिशि विशदयतां सेन्दिरा स्वामभिख्याम् ।।

: ७ :

(उपजातिवृत्तम्)

विशुद्धबुद्धेर्जनताप्रियाया
दिगन्तविश्रान्तयशःकथायाः ।
हृद्यं विदुष्याः शुभमिन्दिराया
गीर्वाणवाण्या चरितं ब्रवीमि ।।

: ८ :

(आर्यावृत्तम्)

इन्दीवरतुल्यगुणायै
भारतदेशस्य प्रधानमन्त्रिपदम् ।
शोभयमानायै श्रीमत्या इन्दिरायै
समर्पयामि पद्येन्दीवरस्रजमिमां प्रणतः ।।

—०—

(उपजातिवृत्तम्)

: ९ :

पुण्यात्मभिः सेवितमात्मवद्भिः
सद्भिः सदाचारविचारवद्भिः ।
स्वर्गापवर्गस्य निमित्तभूतं
प्रयागतीर्थं प्रथितं पृथिव्याम् ॥

: १० :

यदीयमाहात्म्यविमुग्धभावा
दिग्भ्यो विदिग्भ्यः समुपेयिवांसः ।
प्रक्षाल्य पापं कलिकल्मषोत्थं
जना गृहान् स्वान् प्रतियान्ति हृष्टाः ॥

: ११ :

यत्र प्रियस्सङ्गमनान्नदीना-
मन्वर्थनामा खलु तोयराशिः ।
नेत्रद्वयासेचनकश्चकास्ति
विलक्षणः सङ्गमनामधेयः ॥

: १२ :

यत्र स्फुटं भाति विभिन्नरूपं
गाङ्गं जलं यामुनमेव चापि ।
श्यामासु शुभ्राः शशिनः प्रविष्टाः
पादा यथा सान्द्रवनस्थलीषु ॥

: १३ :

यदीयसौन्दर्यहृतान्तरङ्गो
यत् कालिदासः कविताविलासः ।
अवर्णयच्छ्लोकचतुष्टयेन
तीर्थं स्वकाव्ये रघुवंशनाम्नि ।।

: १४ :

पुण्यानि हृद्यानि च शीतलानि
यदोयतोयानि सुपावनानि ।
स्नानेन चैवाचमनेन चापि
कुर्वन्ति लोकं कृतकृत्यरूपम् ।।

: १५ :

तत्रैव तीर्थाधिपतौ वरेण्ये
कश्मीरदेशाभिजनः प्रबुद्धः ।
श्रीमोतिलालाभिधया प्रसिद्ध-
श्चक्रे स्वकीयां वसतिं वदान्यः ।।

: १६ :

कुशाग्रबुद्धया च परिश्रमेण
चोपार्ज्य विद्यां विधिशास्त्रगम्याम् ।
न्यायालयेऽसौ विबभौ भृशं प्राड्-
विवाकरूपेण विदां वरेण्यः ।।

: १७ :

अत्यल्पकालेन बभूव तस्य
यशो विशुभ्रं प्रथितं पृथिव्याम् ।
अतः श्रिया तं युयुजे मुदा श्री-
'र्भवन्ति भव्येषु हि पक्षपाताः' ।।

: १८ :

कालेन ऋद्धिं परमां गतोऽसौ
दध्रे मनो रम्यगृहं ग्रहीतुम् ।
सम्प्रेरितोऽसावनयेच्छया च
कस्यापि गौराङ्गजनस्य गेहम् ।।

: १९ :

चिक्राय, तद्युक्तमथो च भूमेः
खण्डं, रुचिं यद् व्यदधान्न तस्य ।
अतो मनोज्ञं नवमेव गेहं
निर्मापयामास मनीषिधुर्यः ।।

: २० :

नूत्नैः कुथैरास्तरणैस्तथा च
नूत्नैस्तथाऽऽसन्दिवरैरुपेतम् ।
पीठैश्च नूत्नैरथ रम्यरूपै-
र्विराजितं नूतनपारिणाह्यैः ।।

: २१ :

विस्तारिशोभेन सुपुष्पितेनो-
द्यानेन नीराजितमद्वितीयम् ।
श्रीमोतिलालस्य निरीक्ष्य वेश्म
सर्वो जनो विस्मयमाजगाम ।।

: २२ :

आनन्दलाभः सुतरां भवेन्नो
वासेन सद्वैभवसम्भृतेऽस्मिन् ।
इत्येव सञ्चिन्त्य स मोतिलाल
आनन्दपूर्वं भवनं चकार ।।

: २३ :

पत्न्या च पुत्रेण च सङ्गतोऽसौ
द्वाभ्यां तथा चापि सुकन्यकाभ्याम् ।
भृत्यैश्च नैकैरथ गुण्यवश्यै-
रुपेयिवांस्तद् भवनं विपश्चित् ।।

: २४ :

जवाहरेति स्वसुतस्य नामा-
ऽदधाद्विचित्रप्रतिभस्य हृद्यम् ।
पुत्रीद्वयस्यापि च नाम तद्वत्
कृष्णेति लक्ष्मीरिति चापि चक्रे ।।

: २५ :

लक्ष्म्या अभूत्पूर्णतरा समाख्या
युक्ता यदा सा विजयापदेन ।
इत्थं कुटुम्बेन समं सुखेन
श्रीमोतिलालोऽक्षपयत् स्वकालम् ॥

: २६ :

(शालिनीवृत्तम्)

कीर्त्या दीप्रो वाग्विलासेन हृद्यो
वक्त्राम्भोजं रम्यरूपं दधानः ।
ख्यातो लोके कोविदाग्रेसरोऽयं
कालं हृष्टो मोतिलालो विनिन्ये ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
प्रथमः सर्गः ॥

(उपजातिवृत्तम्)

: १ :

श्रीमोतिलालस्य चिराय कश्चिन्
मुबारकालिः खलु लेखकोऽभूत् ।
सर्वात्मना वश्यतमः सिषेवे
यस्तं प्रियं भक्तिपरीतचेताः ।।

: २ :

वार्धक्यमस्मिन् समुपेयिषि स्व-
भक्ते प्रिये जर्जरदेहयष्टौ ।
रोगैरनेकैः किल कैंसराद्यै-
र्ग्रस्ते वराके कृपणे कृशे च ।।

: ३ :

श्रीमोतिलालः करुणार्द्रचेता
आनाययत्तं निजगेहमेव ।
तत्रैव चैकत्र कुटीरकेऽसा-
वकल्पयत्तद्वसतिं वदान्यः ।।

: ४ :

मुबारकालिर्बहुधा व्यचिन्तन्
मनोरथोऽयं मम मृत्युरस्तु ।
जवाहरापत्यमुखारविन्द-
विलोकनानन्तरमेव न प्राक् ।।

: ५ :

तज्जातमात्रा किल कन्यकेयं
श्रीमोतिलालस्य वचोऽनुरुध्य ।
धात्र्या तदभ्याशमनायि सद्यो
जवाहरापत्यमिति प्रदिष्टा ।।

: ६ :

मान्द्याद् दृशोर्विक्लवतावशाच्च
पुत्रीमिमां पुत्रममंस्त वृद्धः ।
भ्रातर्भवान् वर्धत इत्युवाच
श्रीमोतिलालं प्रति चापि हृष्टः ।।

: ७ :

सम्प्रार्थयामास विभुं ततोऽसा-
वायुष्यकामो नवजातकस्य ।
हर्षप्रकर्षाप्लुतचेतसा च
श्रीमोतिलालं पुनरप्युवाच ।।

: ८ :

जवाहरस्तेऽस्ति यथा सुपुत्र-
स्तत्पुत्रकोऽप्येष भवेत्तथैव ।
एवं गिरं स्वां समुदीर्य वृद्धो
हर्षाश्रुसिक्ताननशोभनीयः ।।

: ९ :

जगाम मूर्च्छां, नहि किञ्चिदन्यत्
तस्याभवन्नाम समीहनीयम् ।
दिनद्वयं वाऽपि दिनत्रयं वा
सोऽलब्धसञ्ज्ञो निधनं जगाम ॥

: १० :

पितामही कर्तुमियेष नाम
पौत्र्याः स्वसङ्कल्पितमिन्दिरेति ।
पिता तु तस्याः प्रियदर्शिनीति
ववाञ्छ नामापरमेव कर्तुम् ॥

: ११ :

तयोर्मिथः प्रादुरभूद्विवादो
दुःखाकरः सर्वजनस्य तत्र ।
स्वरूपराण्या च जवाहरेण
च चिन्तितं यन्न तदन्यथा स्यात् ॥

: १२ :

एवं विचित्रां स्थितिमाकलय्य
विवादशान्ति मनसा लषन्ती ।
अस्या जनन्यद्भुतबुद्धियुक्ता
तौ वाचमेतां निजगाद हृद्याम् ॥

: १३ :

नामद्वयं तावदियं बिभर्तु
नाम्नी उभे युक्ततरे मते मे ।
लोके समाख्याद्वयकेन तावत्
ख्याताऽस्तु कन्येयमनन्यरूपा ।।

: १४ :

एवं समाकर्ण्य गिरं तदीयां
पितामही चापि पिता च तस्याः ।
तुष्टान्तरङ्गौ समवर्तिषातां
समस्तुवातां च पटुत्वमस्याः ।।

: १५ :

एवं विवादे गमिते प्रशान्ति
लक्ष्मीस्वरूपाऽभिधयेन्दिरेति ।
गौराङ्गयष्टिः प्रियदर्शनात्वा-
त्ख्याता बभूव प्रियदर्शिनीति ।।

: १६ :

न केवलेनैव मूबारकाले-
गढिन हार्देन शुभाशिषा सा ।
नक्षत्रयोगप्रकटीकृतेन
प्रभुप्रसादेन परिगृहीता ।।

: १७ :

इन्दीवराक्षी तनुगात्रयष्टिः
सुलोचना चारुतराऽचकासीत् ।
पितुश्च मातुश्च तया गृहीतं
रम्यं स्वरूपं स्वपितामहाच्च ॥

: १८ :

श्रीमोतिलालस्य गृहे विशाले
तज्जन्महेतुर्न ममौ प्रहर्षः ।
तस्मिंस्तथा तस्य च बन्धुवर्गे
तेनोत्सवोऽनन्यसमः प्रवृत्तः ॥

: १९ :

पौत्रीमुखं मुग्धतरं विलोक्य
श्रीमोतिलालः परमं कृतार्थः ।
उपायनानां प्रददौ शतानि
स्वबन्धुवर्गाय तदीप्सितानि ॥

: २० :

एवं प्रवृत्तो रुचिरोत्सवोऽत्र
दिनान्यनेकानि नदृष्टपूर्वः ।
यत्राशितुं पातुमथो यथेच्छ-
मलभ्यताश्चर्यंगतेन पुंसा ॥

: २१ :

अनन्तरूपा किल बन्धुपङ्क्तिः
प्राप्ता विदिग्भ्यश्च तथा च दिग्भ्यः ।
वर्धापनाः स्वाः शुभकामनाश्च
श्रीमोतिलालाय ददौ प्रहृष्टा ॥

: २२ :

यद्यप्यभूत्तत्र जनः समोऽपि
तुष्टान्तरङ्गः सुखितश्च भूयः ।
एका पुनः पौत्रमुखं दिदृक्षुः
पितामहीषद्विमनायिताऽभूत् ॥

: २३ :

तामभ्यवोचत् सुविचिन्तितार्थां
श्रीमोतिलालो गिरमित्युदाराम् ।
मैवं शुचे दाः स्वमनः शुभे ! त्वं
पुत्री वरा पुत्रशतेभ्य एषा ॥

: २४ :

सत्यं हि तत्कर्म करिष्यतीयं
नान्येन केनाऽपि कृतं पुरा यत् ।
निशम्य पत्युर्गिरमेवमर्थ्यां
स्वचेतसो ग्लानिमसावहासीत् ॥

: २५ :

(भुजङ्गप्रयातवृत्तम्)

प्रसन्ना गतग्लानिरेवं मनस्वि-
न्यसौ स्नेहधारां ववर्षाशु तस्याम् ।
श्रीमोतिलालस्य चाऽपि प्रियाऽसा-
ववर्धिष्ट बाला सुखैः सम्परीता ।।

।। इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
द्वितीयः सर्गः ।।

(भुजङ्गप्रयातवृत्तम्)

: १ :

निभाल्याननं मुग्धमस्या मनोज्ञं
मनो मोतिलालस्य भूयो ननन्द ।
अलभ्यः पदार्थो मया कोऽपि लब्धः
सुखं तावदस्यैवमाविर्बभूव ॥

: २ :

कृशाङ्गी तथा काञ्चनीं देहयष्टिं
दधाना प्रफुल्लाब्जनेत्रेन्दिराऽसौ ।
समस्य स्वबन्धोर्हृदि स्नेहमिश्रं
प्रहर्षप्रकर्षं ववर्षाशु भूयः ॥

: ३ :

स्वकान्त्या शरच्चन्द्ररेखेव रम्या
व्यवर्धिष्ट सा तन्वती हर्षवृद्धिम् ।
पितामह्यथास्यै कथा नैकरूपा
जगाद प्रशस्ता जगौ चापि हृष्टा ॥

: ४ :

अनेकानि गीतानि भक्तिस्वरूपा-
ण्यहो ! श्रोत्रयोस्तर्पणानि प्रकामम् ।
पिता चास्यकै पुत्रिकायै निजाया
अनेकानि तुष्टो ददौ पुस्तकानि ॥

: ५ :

स्वपौत्र्यै तथा मोतिलालो विचित्रा
अनेकाकृतीरार्पिपत् पुत्रिकाश्च ।
चिरं क्रीडनं तन्वती याभिरेषा
प्रहर्षस्य कोटिं परामारुरोह ।।

: ६ :

गृहीते तया मोतिलालादुदार-
मनस्कत्वमुच्चै रुचिः संस्कृता च ।
पितुश्चापि लब्धे तया पुस्तकेषु
प्रसक्तिः सदा साहसं चाप्रधृष्यम् ।।

: ७ :

पितामह्यथास्यै ददौ स्नेहयुक्ता
निजे वाङ्मये भक्तिमास्थां दृढां च ।
पुराण्यां तथा संस्कृतौ प्रेमपाकं
ददावम्बिका सौकुमार्यं च तस्यै ।।

: ८ :

शुभं यद्यदेवाबभौ स्वेषु बन्धु-
ष्वसौ तत्तदेवाग्रहीत्तेभ्य एव ।
स्वकालप्रभावस्तु सर्वातिशायी-
ति साऽऽदत्त तस्मात्तु सर्वाधिकं हि ।।

: ९ :

यदा भारतेऽलब्ध देशे सुरम्ये
जनिं कन्यकेयं तदा पारतन्त्र्यम् ।
अभूदत्र, तेनाऽऽस्त चिन्ता समेषां
पराधीनतायां सुखं कस्य वा स्यात् ।।

: १० :

स्वतन्त्रः कथं सम्भवेदेष देशः
कथं च स्वराज्यं भवेदत्र वेति ।
स्वदेशप्रिया हन्त ! तान्तान्तरङ्गा
निजं कालमार्ता विनिन्युः कथञ्चित् ।।

: ११ :

अभूत्तत्र कश्चिन्महात्मेतिपूर्वः
प्रसिद्धिं गतो गान्धिनामा मनस्वी ।
प्रियां मातृभूमिं स्वतन्त्रां विधातुं
प्रयत्नं परं यः सुधीराततान ।।

: १२ :

जनान् भारतीयानसावित्थमूचे
विदेशादुपेता इमे शासका नः ।
अवश्यं भवद्भिर्विनिःसारणीयाः
स्वतन्त्रो भवेद्येन देशोऽस्मदीयः ।।

: १३ :

निशम्यादसीयां गिरामर्थगुर्वीं
स्वदेशप्रिया लक्षशः कोटिशश्च ।
जनाः सम्प्रवृत्तास्तमेवानुगन्तुं
नदीनां जलं सागराम्भो यथावत् ।।

: १४ :

महद्वैभवं प्राप्तवान् प्राड्विवाक-
स्तथाऽपि स्वदेशे परं प्रेम बिभ्रत् ।
सुधीर्मोतिलालोऽपि मान्यो जनानां
तमेवानुगन्तुं मनः स्वं बबन्ध ।।

: १५ :

सुतो लब्धविद्यश्च पाश्चात्यदेशे
जवाहर्समाख्यः सुधीस्तस्य चापि ।
तमेवानुगन्तुं दृढं निश्चिकाय
स्वदेशस्वतन्त्रत्वलाभप्रणुन्नः ।।

: १६ :

विदिग्भ्यश्च दिग्भ्यश्च लोकाः समायुः
प्रसिद्धं तयोर्वेश्म तौ द्रष्टुकामाः ।
चिरं चापि तेषां सहाभ्यामुभाभ्यां
पितापुत्रकाभ्यामवर्तिष्ट चर्चा ।।

: १७ :

प्रवृत्ते च चर्चाप्रसङ्गे चिराय
स्वपौत्र्यां भृशं स्नेहभाङ् मोतिलालः ।
निजोत्सङ्ग एवाकरोल्लालयंस्तां
परां निर्वृतिं प्राप सा चापि तत्स्था ॥

: १८ :

प्रबुद्धाऽपि बाल्यान्न साऽबुद्ध चर्चां
धृतः शब्दपूगोऽनयाऽभूत्तु कश्चित् ।
अमुष्या अभूवन्नहो ! संस्तुतानि
शिशुत्वेऽप्यनेकानि तावत् पदानि ॥

: १९ :

भृशं क्रान्तिसत्याग्रहादीनि, तेषां
स्फुटोऽजायतार्थोऽपि कालक्रमेण ।
वयोवृद्धितो ज्ञानवृद्धिर्भवेदि-
त्युदारो विचारो विपश्चिज्जनानाम् ॥

: २० :

कथं देशकार्ये प्रवृत्यं मयेति
चिरं संस्थिता चिन्तयामास बाला ।
स्वदेशस्वतन्त्रत्ववाञ्छा प्रकामं
तदा सम्प्रवृत्ताऽभवन्मानसेऽस्याः ॥

: २१ :

गृहे नापरो बाल आसीदितीयं
न शक्ताऽभवत्साहचर्याप्तयेऽस्य ।
चिराय स्थितैकाकिनी क्रीडनैः स्वैः
कथञ्चित्स्वकं कालमेषा निनाय ।।

: २२ :

कदाचित्पितुः पुस्तकागारमध्ये
स्थिताऽध्यैष्ट रुच्यान्यथो पुस्तकानि ।
अभूवन् पुनः कानिचित्तत्र चापि
विशिष्टोऽभियोगोऽभवद्येष्वमुष्याः ।।

: २३ :

अथैवंविधेष्वेकमासीद्विशिष्ट-
तरां मानसेऽस्या व्यतानीद्रुचिं यत् ।
कथा तत्र या वर्णिताऽभूदियं तां
निपाठं निपाठं परां तृप्तिमापत् ।।

: २४ :

विचित्रा पुरा जोनफार्केतिनाम्नी
बभूव प्रसिद्धा शुभा कन्यकैका ।
स्वतन्त्रं विधातुं निजं फ्रांसराष्ट्रं
मुदा या जुहाव स्वमग्नौ समिद्धे ।।

(अनुष्टुब्वृत्तम्)

: २५ :

मुग्धा ग्रामीणकन्या सा कदाचिदशृणोद् गिरः ।
आकाशात्प्रेरयन्तीस्तां स्वस्य देशस्य मुक्तये ।।

।। इति डा०सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
तृतीयः सर्गः ।।

(अनुष्टुब्वृत्तम्)

: १ :

तुरङ्गमं समारुह्य कवचं परिधाय च ।
नेतृत्वमाचरन्तीयं जनान् उच्चैरबोधयत् ॥

: २ :

आङ्ग्लैराक्रान्तमस्त्यद्य नो राष्ट्रं फ्रांसनामकम् ।
सन्देशं लब्धवत्यस्मि प्रभोरस्य विमुक्तये ॥

: ३ :

प्रहसन्तो न वाक्येऽस्या जनाः पूर्वं विशश्वसुः ।
परं केनाऽपि कालेन परं विश्वासमाययुः ॥

: ४ :

तां च कन्यां पुरस्कृत्य सर्वे ते फ्रांसदेशजाः ।
आङ्ग्लान् उत्सार्य देशं स्वं प्रियं स्वातन्त्र्यमापिपन् ॥

: ५ :

वीरकन्या तु सा हन्त ! रिपूणां वशमागता ।
ते च तां शूलमारोप्य तदधोऽग्निमदीपयन् ॥

: ६ :

यत्र सा दीप्तवदना कृतकार्या मनस्विनी ।
भस्मशेषा बभूवाथ पुण्याँल्लोकाञ्जगाम च ॥

: ७ :

जोनफार्केतिनाम्न्या यत्कृतं कर्म विलक्षणम् ।
किं तत्कर्तुमनीशास्मि देशो मेऽपि प्रियो मतः ।।

: ८ :

इत्येवं नैकधा बाला प्रियदर्शिन्यचिन्तयत् ।
बुद्धिवैभवमेतस्या वयसो ह्यत्यरिच्यत ।।

: ९ :

एकदा धात्र्यपश्यत्तां मीलिताक्षियुगां शुभाम् ।
स्तम्भमेकं समाश्रित्य बाहुभ्यां परिवेष्टितम् ।।

: १० :

स्थितामव्यक्तवचनां शूलारोहणमुद्रया ।
अनुकुर्वतीं वीरकन्यां जोनफार्केतिनामिकाम् ।।

: ११ :

भास्वरो मुखवर्णोऽस्याः सुतरां पर्यलक्ष्यत ।
पद्युगं शिखिनो ज्वाला विशन्तीरिव साऽन्वभूत् ।।

: १२ :

दृष्टा धात्र्या स्थितावस्थां ललज्जे बालिका भृशम् ।
न च कस्मैचनाचष्ट धात्री तच्चेष्टितं प्रिया ।।

: १३ :

यथा यथा व्यतीयाय कालो, लोकस्तथा तथा ।
भारतीयो दृढास्थः सन् स्वातन्त्र्यायोदयुज्यत ॥

: १४ :

आन्दोलनादिकं चापि भूयस्तत्र चकार सः ।
प्रदर्शनानि नैकानि समायोजयतापि च ॥

: १५ :

शासित्राज्ञामनादृत्य सत्याग्रहपरायणाः ।
जना रोषं विवव्रुः स्वं शतशोऽथ सहस्रशः ॥

: १६ :

शासनं परदेश्यानां विद्रोहस्य प्रशान्तये ।
तान् सत्याग्रहिणः सर्वान् पशुताडमताडयत् ॥

: १७ :

रक्तोष्णीषाश्च ये तत्र नियुक्ता रक्षणे वशाः ।
दण्डैस्ते गुलिकाभिश्च तानघ्नन् नृपिशाचकाः ॥

: १८ :

आनन्दभवनाद्याताः सत्याग्रहपरायणाः ।
नैके रक्षिभिराबालं बहुशः सम्प्रताडिताः ॥

: १९ :

तद् दृष्ट्वा बालिका ह्येषा सुतरां मन्युमाविशत् ।
अहो ! दौरात्म्यमेतेषामिति कष्टं च साऽन्वभूत् ॥

: २० :

तत्कष्टं क्रीडने तस्याः सुतरां पर्यलक्ष्यत ।
बालानां हि मनोभावा बलादाविर्भवन्त्यहो ! ॥

: २१ :

तस्याः क्रीडनकेष्वासन् पुत्रिकाष्टिनधातुजाः ।
सत्याग्रहाणां काश्चन रक्षिणां चापि काश्चन ॥

: २२ :

आकृतीर्दधिरे चित्राः, तत्रैषा तासु बालिका ।
सत्याग्रहाकृतीस्तावदेकत्र निदधे बुधा ॥

: २३ :

रक्ष्याकृतीरथान्यत्र, क्रीडा तस्या बभूव सा ।
तत्पश्चाच्च तयोर्युद्धं तुमुलं सा ह्यचीकरत् ॥

: २४ :

युद्धे च तुमुले वृत्ते टिनसङ्घर्षसस्वने ।
रक्षिरूपा जिताः सर्वा निपेतुर्भुवि पुत्रिकाः ॥

: २५ :

सत्याग्रहिस्वरूपिण्यः स्थितास्तासु विरेजिरे ।
करे निजे ध्वजान्नैकांस्त्रिरागान् दधतीः शुभाः ॥

: २६ :

(आर्यावृत्तम्)

भारतमाता जयतु जयतु च हिन्दुभिर्मुसलिमस्नेहः ।
जयतु महात्मा गान्धीत्येवं सोदवोचत्स्वरेण तारेण ॥

: २७ :

(अनुष्टुब्वृत्तम्)

सत्याग्रहपुत्रिकाणां जयमेतं निरीक्ष्य सा ।
हर्षध्वनिं चकारोच्चैः करध्वनिमथापि च ॥

: २८ :

एवमस्याः प्रबुद्धाया युगधर्मप्रभावतः ।
क्रीडनेऽपि स्वतन्त्रत्वसङ्घर्षः पर्यलक्ष्यत ॥

: २९ :

(उपजातिवृत्तम्)

एवंविधेषु खलु रुच्यतरेषु सक्ता
बालाऽप्यबालमतिवैभवशालिनी सा ।
देशानुरागपिशुनेषु विलक्षणेषु
कालं निनाय सुखिता निजखेलनेषु ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
चतुर्थः सर्गः ॥

(वैतालीय (सुन्दरी) वृत्तम्)

: १ :

अथ जन्म यदाऽभवच्छुभ-
मदसीयं विविधास्तदाऽभवन् ।
घटना घटनापटोर्विधे-
र्विविधं चेष्टितमत्र लक्ष्यते ॥

: २ :

ननु शान्तिमयात्तदा किला-
प्रतिमो दारुणविश्वसङ्गरः ।
विपुले रशियाऽभिधेऽभवत्
तुमुला क्रान्तिरथो भुवोंऽशके ॥

: ३ :

इति वृत्तयुगप्रभावितः
प्रथितोऽस्या जगतीतले पिता ।
अगमद् बहुशो निजां प्रियां
विपुलां मातृभुवं विदां वरः ॥

: ४ :

परितो निजतेजसो ह्यसौ
वलयं नेत्ररसायनं दधत् ।
स्वयमेव निनाय दृक्पथं
निजदेशेऽवृतदत्र यत्तदा ॥

: ५ :

ब्रिटिशाभिधशासकाः शठाः
पशुमारममारयंस्तदा ।
निजदेशगतानिति क्रुधा
हृदयं भिन्नमिवाभवद् द्विधा ॥

: ६ :

अथ रोषमुपागतः सुधीः
प्रतिकारं खलु तस्य चिन्तयन् ।
क्षणमात्रमभून्न सक्षण
उरगो बद्ध इवाबभौ तथा ॥

: ७ :

निजचेतसि निश्चिकाय स
प्रतिरोधं, स तदीप्सितोऽभवत् ।
जनविप्रियमाचरत्कथं
बत ! सह्यं भुवि शासनं भवेत् ॥

: ८ :

समयेऽभवदत्र दारुणं
किल वृत्तं मनसो विदारणम् ।
जलियांवलनामकेऽन्तरे
गुलिकाभिर्निहताः स्वदेशजाः ॥

: ९ :

अधिगत्य तु वैशसस्य तद्
अतिदुःखाकरवृत्तमात्मनः ।
हृदयेऽनलमिद्धमन्वभूज्
जनतानेतृवरो जवाहरः ॥

: १० :

दिवसे दिवसे च स प्रियो
निजलोकं निजगाद कोविदः ।
अयि ! शासनमाततायि भोः
सहते क्रूरमिदं भवान् कथम् ? ॥

: ११ :

निजजन्मभुवः पराभवो
न मनो दारयते कथं नु वः ? ।
जननी निजजन्मभूर्मता
न विषह्यः खलु तत्पराभवः ॥

: १२ :

इति तस्य गिरं गरीयसीं
श्रुतिकर्मीकृतवाननेकशः ।
अनुगन्तुमियेष चेतसा
दृढबद्धेन तमेव सज्जनः ॥

: १३ :

अथ यत्र ययावसौ पुन-
जंनपङ्क्तिः सुतरां तमन्वयात् ।
प्रसृता दश दिक्षु निर्मला
जलधारा इव निम्नगापथः ॥

: १४ :

अतिशुभ्रं यश आनने वह-
न्नतिगौरत्वमिषेण बुद्धिमान् ।
स्वजनस्य जनस्य भूयसा-
ऽजनयत्प्रीतिमलौकिकीमसौ ॥

: १५ :

अतिभूमिमुपेतवान् स्थितः
परितोऽमुं खलु तेजसां चयः ।
प्रखरातपवान् यथांऽशुमान्
अविषह्योऽधिकृतैरलक्ष्यत ॥

: १६ :

मनसाभ्युपगत्य तद्गिरं
शतशश्चैव जनाः सहस्रशः ।
बलवद् व्यदधुर्विदेशिनां
प्रतिरोधं निजदेशभक्तितः ॥

: १७ :

प्रतिवासरमेव ते सभा
व्यदधुस्तत्र च तान् व्यगर्हयन् ।
ब्रिटिशान्, वचनं तदप्रियं
महता कण्ठरवेण चावदन् ॥

: १८ :

समुपेत्य च पण्यवीथिका
लघुसङ्घाः प्रतिवासरं दृढाः ।
बहुधाऽऽपणिकानवारय-
न्नथ वैदेशिकपण्यविक्रयात् ॥

: १९ :

यदि नोऽभ्युपयन्ति सद्वचो
न भवन्तः, स्थितिरत्र नो भवेत् ।
इति वाचमुदीर्य ते दृढां
नहि ताभ्यः कथमप्यपाययुः ॥

: २० :

नहि केवलमेतदेव ते
व्यदधुः कर्म विलक्षणं जनाः ।
इतरा बहुचर्चिता अपि
स्थिरबुद्ध्याऽकृषत क्रियाः प्रियाः ॥

: २१ :

सुदृढानि विदेशजानि च
नववासांस्यनलाय ते ददुः ।
निमिषेण गतः प्रदीप्ततामनलस्तानि च भस्मसाद् व्यधात् ॥

: २२ :

इति कृत्यविधौ स्वदेशिनां
सकुटुम्बः स हि मूर्धनि स्थितः ।
जननेतृवरो जवाहरो
हृदये स्फूर्तिमधादलौकिकीम् ॥

: २३ :

कमला सहधर्मचारिणी
सुतरामेतमनुव्रताऽभवत् ।
कृशतां वपुषो दधत्यपि
बहुकष्टान्यसहिष्ट सा दृढा ॥

: २४ :

जननी च जरां गता भृशं
दृढसङ्कल्पवती तमन्वयात् ।
स्वसृयुग्ममथो तथैव च
निजसोदर्यविधिं गतं बभौ ॥

: २५ :

(उपजातिवृत्तम्)

एवं स्वदेशार्थमभूत् स्वकीयः
समर्पितो नेहरुवंशजातैः ।
अर्थश्च कायश्च तथा च कालो
मनस्विनां स्वं नहि किञ्चिदस्ति ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
पञ्चमः सर्गः ॥

(उपजातिवृत्तम्)

: १ :

वैदेशिका वीक्ष्य विवृद्धमन्यून्
उदात्तसत्त्वानथ भारतीयान् ।
अस्वस्थचित्ता बलवद् बभूवुः
पादाहताशीविषतुल्यरूपाः ।।

: २ :

अस्माकमेभ्यः कथमस्तु मुक्तिः
कथं च शक्याः प्रतिरोद्धुमेते ।
इत्येव चिन्ताकवलीकृतास्ते
कालं कथंचित् क्षपयाम्बभूवुः ।।

: ३ :

शङ्कापरीता बहु चिन्तयित्वा
निश्चिक्युरेवं खलु ते नृशंसाः ।
अपाकृताः स्युर्यदि नेतृवर्या
एभ्यो भवेत्सिद्धमभीप्सितं नः ।।

: ४ :

गोपालहीना इव गोवृषाः स्यु-
र्हीना इमे नेतृवरैः स्वकीयैः ।
इत्येव निश्चित्य निचिक्षिपुस्ते
कारागृहे नेतृवरानमीषाम् ।।

: ५ :

श्रीमोतिलालश्च जवाहरश्च
द्वावप्यभूतां जननेतृवर्यौ ।
अतः प्रियौ सर्वजनस्य मान्यौ
तावप्यनैषुः किल बन्दिगेहम् ।।

: ६ :

आनन्दनाम प्रथितं पृथिव्यां
विलक्षणं यद् भवनं विरेजे ।
आसीत्तदानन्दविहीनमेव
विच्छायमेवापि च शून्यमेव ।।

: ७ :

चन्द्रे यथा कान्तियुतेऽपयाते
सूर्ये प्रदीप्ते च गतेऽन्यलोकम् ।
दशा भवेद्या गगनस्य हन्त !
सैवाभवत् तद्भवनस्य तावत् ।।

: ८ :

नैवाऽगमच्छ्रोत्रयुगं तदानीं
श्रीमोतिलालस्य शुभोऽट्टहासः ।
न वा तदालक्ष्यत भव्यमूर्ति-
र्जवाहरश्चिन्तनदत्तचित्तः ।।

: ९ :

न तज्जनाकीर्णमभूत्तदानीं
न वा नवाऽजायत तत्र चर्चा ।
शून्यं जनस्थानमिवाबभौ तत्
स्त्रीलोकनाथं भवनं तदानीम् ।।

: १० :

वीरद्वये बन्दिगृहं गतेऽपि
पर्याकुलत्वं हृदये गतेऽपि ।
न स्त्रीजनस्तत्र जहौ स्वधैर्यं
स्वदेशरक्षादृढबद्धबुद्धिः ।।

: ११ :

मनस्विनां तावदुपोढसत्त्वो
विपत्सु मग्नोऽप्यसुखस्थितोऽपि ।
न स्त्रीजनः प्राकृतवत्कदाचिच्
चेष्टेत शैलप्रतिमस्वभावः ।।

: १२ :

अतो गते बन्दिगृहं स्वबन्धु-
युग्मेऽपि तत्कार्यविधौ प्रसक्तः ।
स स्त्रीजनोऽभूत्, नहि किञ्चिदन्यत्
कर्तव्यमासीत् खलु तस्य काम्यम् ।।

: १३ :

दिने दिनेऽसौ विपणिं प्रपद्य
वैदेश्यपण्यक्रयविक्रयाभ्याम् ।
निवारयामापणिकान्बभूव
सभाश्च गोष्ठीश्च चकार नैकाः ।।

: १४ :

ओजस्विनीं वाचमथापि तासु
देशस्वतन्त्रत्वपरां जगाद ।
विद्यालयांश्चापि गतो ह्यनेकान्
विदेशिशिक्षापरिहारकामः ।।

: १५ :

तद्द्वारि बद्धस्थितिको दृढास्थः
प्राबूबुधच्छात्रगणान् समेतान् ।
दास्याय भो ! नूनमियं भवेद्वो
विद्येति तां किं समुपार्जयध्वम् ? ।।

: १६ :

प्रातर्गृहान् सम्प्रविहाय यातः
स्थानान्यनेकानि कृतश्रमश्च ।
प्रत्याययौ स्त्रीजन एष सायम्
अभूदथास्याह्निकमेतदेव ।।

: १७ :

एकाकिनी बन्धुजनैर्विहीना
कन्येन्दिराऽहः खलु सर्वमेव ।
यथाकथञ्चित्समयं स्वकीयं
निनाय नातिप्रमना गृहे स्वे ।।

: १८ :

पितामहीं चापि निरीक्ष्य चाम्बां
पितृष्वसारौ च विवृद्धसत्त्वाः ।
वासो वसाना पुरुषानुकूलं
कन्यैषकेयेष तदेव धर्तुम् ।।

: १९ :

खादीतिनाम्ना प्रथितेन तावत्
साधारणेनैव कृतं पटेन ।
सा प्रावृतान् वीक्ष्य समान् स्वबन्धून्
तद्धारणे ह्येव मनो बबन्ध ।।

: २० :

पुंवेषधारी ललनाजनोऽस्ति
सत्यं भृशं स्फूर्तिकरो जनानाम् ।
अतः स्वयंसेवकवत् प्रतीता
पुंवेषधृत्स्यामिति सा चकाङ्क्ष ।।

: २१ :

तद्द्वेषधृच्चापि भृशं प्रतीता
नानाविधैर्दिव्यगुणैरुपेता ।
बालाऽप्यबालेव विवृद्धसत्त्वा
कुशाग्रधीः स्फूर्तिमती प्रदीप्ता ॥

: २२ :

निजाम्बया गन्तुमियेष साकं
तत्रैव सा गच्छति यत्र सा स्म ।
बालेति तस्या गमनं परन्तु
नारोचयत् स्वेन समं सुधीः सा ॥

: २३ :

तेनाऽतिदूनाऽतिकृशाङ्गयष्टि-
रेकाकिनी ग्रीष्मऋतोरहानि ।
दीर्घातिदीर्घाण्यतिदीर्घदृष्टि-
र्निनाय सा दीर्घतरे गृहे स्वे ॥

: २४ :

यथावसौ क्लान्ततरा कदाचिद्
ग्रन्थालयं स्वस्य पितुर्विशालम् ।
ग्रन्थाननेकांश्च समध्यगीष्ट
ततः प्रबुद्धा स्ववयोऽनुरूपान् ॥

: २५ :

(रथोद्धतावृत्तम्)

ग्रन्थपाठनिरता यदा च सा
श्रान्तिलेशमिव कश्चिदन्वभूत् ।
तं विनोदयितुमेव कन्यका
क्रीडने निजमनो बबन्ध सा ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
षष्ठः सर्गः ॥

(रथोद्धतावृत्तम्)

: १ :

गान्धिनामकमहात्मना कदा
सङ्गतेयमभवत् कुमारिका ।
नैव तत्स्मृतिपथेऽवभासते
दूरवृत्तमिव चैव भासते ।।

: २ :

यत्नतोऽपि नहि स शुभः क्षण-
स्तत्स्मृतौ स्फुरति यत्र सङ्गतः ।
गान्धिनामकजनाधिनायको
लोकसङ्ग्रहपरायणस्तया ।।

: ३ :

शैशवे वयसि संस्थिता चतु-
र्हायणी स्वपितृसङ्गतेन्दिरा ।
साभ्रमत्यभिधया श्रुते यया-
वाश्रमेऽतिरमणीयरूपिणि ।।

: ४ :

तत्र चाप्यथ महात्मनो मनो-
मोहकैर्हृतमना वचोभरैः ।
क्लेशजातमपि कन्यका ह्यसौ
नैव हन्त ! मृदुगात्र्यमन्यत ।।

: ५ :

प्रातरेव शयनं विहाय सा
साभ्रमत्यभिधनिम्नगातटे ।
सङ्गतेतरजनैः समं जगौ
प्रार्थनादिवचनानि कन्यका ॥

: ६ :

आश्रमस्थितजनान्ददर्श तत्-
तत्क्रियासु निरताञ् शिशुश्च सा ।
भोजनादिपचनं प्रकुर्वतो
भूमिमार्जनपरांस्तपस्विनः ॥

: ७ :

वीक्ष्य तान् प्रमुदितेन्दिरा सुधीः
कर्तुमैच्छदखिलाः स्वयं क्रियाः ।
कष्टजातमपि साऽन्वभूद् ध्रुवं
नूतनत्ववशतो विनोदकृत् ॥

: ८ :

कञ्चिदेव समयं विनीय तद्-
आश्रमे रसमयं मनोहरे ।
इन्दिरा स्वपितृसङ्गता मही-
मण्डनं निजगृहं न्यवर्तत ॥

: ९ :

तत्समागतवती च कन्यका
किञ्चिदन्यदिव सन्ददर्श सा ।
तत्क्षणे प्रविबभौ स्वतन्त्रता-
सङ्गरः प्रतिदिनं प्रवृद्धिमान् ॥

: १० :

वस्तुजातमिह यत्स्वदेशजं
ग्राह्यमस्तु सुतरां तदेव नः ।
वर्जनीयमथ यत्तदन्यथे-
त्येवमास्त जनदर्शनं तदा ॥

: ११ :

तद्वशाच्च जनताऽक्षिपत् स्वयं
वस्त्रजातमनले विदेशजम् ।
सोऽपि तत्र निमिषेण तद् व्यधाद्
दीपितोऽतितरकां च भस्मसात् ॥

: १२ :

एकदा परिददर्श कन्यको-
द्यानभित्तिबहिरात्मवेश्मनि ।
वस्त्रजातपरिवर्धितं भृशं
दीपितं च निशि जातवेदसम् ॥

: १३ :

तं निरीक्ष्य गगनस्पृशं त्विषा
भासयन्तमभितो दिगन्तरम् ।
कन्यका बलवदभ्यभूयत
तत्समीपगमनेच्छया शुभा ।।

: १४ :

आविकाङ्क्षमपि सा ववाञ्छ च
र्नतितुं तमभितो हुताशनम् ।
तत्पिता तु न हि तद्धिताकुलो
ऽपत्यवत्सलतयाऽन्वमन्यत ।।

: १५ :

आह चापि दृढवागिमामसौ
याहि, शेष्व, ननु माऽस्तु ते चिरम् ।
काल्यमेव शयनं विदां वराः
शैशवे वयसि शोभनं विदुः ।।

: १६ :

तातपादवचनं निशम्य सा
तूर्णमेव शयनं समाश्रयत् ।
स्वेप्सितार्थविनिवारणं यतः
सा बभूव विमनायिता ततः ।।

: १७ :

मत्पिता किमिति मत्स्पृहामिमां
नैव हन्त ! कलयाऽप्यमन्यत ।
इत्यभून्मनसि तद्व्यथा भृशा
बालका अपि सुसूक्ष्मवेदिनः ।।

: १८ :

किन्तु तातमभिलक्ष्य तद्रुषा
नैव कालमतिमात्रमास्थिता ।
सा प्रियाऽस्य बलवद्व्यथाऽभवत्
सोऽपि तावदभवच्च तत्प्रियः ।।

: १९ :

वृत्तमेतदनु तत्पिता यदा
बन्दिवेश्मनि निपातितोऽभवत् ।
भूयसीमियमयाद्व्यथां तदा
स्वाङ्गुलीषु च दिनान्यजीगणत् ।।

: २० :

तत्पिता खलु ततः पृथक्कृतो
न क्षणं समभवत्स सक्षणः ।
पुत्रिकाविरहितः पिता कथं
शान्तिमेतु धृतिसंयुतोऽपि सन् ।।

: २१ :

एकदा प्रति च बन्दिवेश्मतः
प्राहिणोत्स्वतनयां स पत्रकम् ।
अन्वयुङ्क्त च सुते ! कथं न्वभात्
कालिकातगतपक्षिवेश्म ते ॥

: २२ :

आह चापि कुरु मद्गिरा ध्रुवम्
अक्षरग्रहणमस्तु ते द्रुतम् ।
पत्रकाणि पठितुं भवेर्मम
त्वं क्षमेत्यभिलषामि पुत्रिके ! ॥

: २३ :

द्रष्टुमत्र समुपेहि मां शुभे !
त्वन्मुखाब्जपरिदर्शनोत्सुकम् ।
न प्रियं खलु भवेन्ममाधिकं
सङ्गमात्तव मदीप्सिताच्चिरम् ॥
(स्वागतावृत्तम्)

: २४ :

तातवाक्यमथ सा प्रतिपद्य
बन्दिगेहमभवत् प्रतिपन्ना ।
तामवेक्ष्य जनकः स्वकमेकं
मित्रमाह वच एवममुष्याः ॥

: २५ :

इन्दिराऽतिकृशगात्रतया मे
पाण्डुवर्णमुखकान्तितया च ।
मानसीं प्रवितनोति विशिष्टा-
मन्यचिन्तनपराङ्मुखचिन्ताम् ।।

: २६ :

शिक्षणं खलु भवेत्कथमस्या
इत्यभून्मनसि तस्य वितर्कः ।
साधुशिक्षितजना भुवि सत्यं
लोकलोचनमुदं जनयन्ति ।।

: २७ :

कालमेवमनयत्स सुखेन
लोकहारिचरितो जनकोऽस्याः ।
तादृशा भुवि जना न कदापि
प्राकृता इव शुचं गणयेयुः ।।

।। इति डा०सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
सप्तमः सर्गः ।।

(उपजातिवृत्तम्)

: १ :

अथैकदा बुद्धिमतीन्दिरेयं
काँग्रेसलोकान्निजदेशकार्ये ।
रतानवालोक्य तथैव तूर्णं
चेष्टाविधौ मानसमाबबन्ध ॥

: २ :

काँग्रेसनाम्नः सदसः सदस्य-
भूता विधास्याम्यहमेवमेव ।
स्वदेशसेवामिति बद्धभावा
स्वसद्मनः सन्निहितं नवस्य ॥

: ३ :

स्वराज्यपूर्वं भवनं जगत्या-
मित्येवमाख्यां गतवत्पुराणम् ।
श्रीमोतिलालेन पितामहेन
स्वयं स्वदेशाय मुदा प्रदत्तम् ॥

: ४ :

काँग्रेसनाम्नः सदसः शुभस्य
प्रधानकार्यालयमद्वितीयम् ।
सदस्यतां तत्सदसो लषन्ती
बाला विशालं मुदिताऽऽससाद ॥

: ५ :

ददर्श चात्र ह्यधिकारिणं सा
सम्प्रार्थयामास सदस्यतां च ।
कांग्रेसनाम्नः सदसः शुभस्य
पुत्रीन्दिरा नाम जवाहरस्य ॥

: ६ :

अल्पं वयस्ते ननु गच्छ मुग्धे !
न त्वादृशा द्वादशवर्षदेश्याः ।
बालाः क्षमा अस्य सदस्यताया
इत्येवमाहाधिकृतः स तां स्म ॥

: ७ :

विंशेऽत्र वर्षेऽस्ति सदस्यताप्ति-
रष्टादशे वा खलु सम्भवेत्सा ।
जनस्य तावद्वयसः स्थितस्ये-
त्येवास्ति बाले ! नियमोऽत्र क्लृप्तः ॥

: ८ :

साऽऽकर्ण्य तस्याधिकृतस्य वाचं
स्वेच्छाविघातेन मनाग् विषण्णा ।
भवन्तमेताऽस्मि पुनस्तथैव
षड्हायनानन्तरमित्युवाच ॥

: ९ :

सञ्चिन्तयामास च दीर्घमेवा-
लब्धप्रवेशाः कथमेव हन्त !
कांग्रेसनाम्ना सदसि प्रसिद्धे
बालाः स्वदेशस्य हितं विदध्युः ॥

: १० :

सञ्चिन्तयन्त्याः खलु मानसेऽस्या
नूत्नः शुभः प्रादुरभूद्विचारः ।
बालाः स्वयं स्वं रचयन्तु नूत्नं
सदः प्रकुर्वन्तु च देशकृत्यम् ॥

: ११ :

सञ्चिन्तनैनेव शुभेन पट्वी
सम्प्रेरिता साऽतिकृशाङ्गयष्टिः ।
आयोजने बालसभस्य तावन्
मनोऽविलम्बं दृढमाबबन्ध ॥

: १२ :

अकालहीनं मतमेतदस्याः
प्रयागराजे नगरे प्रसिद्धम् ।
बालाः स्वकं सङ्घटयन्ति नूत्नं
कांग्रेसमित्यास्त जनो विलक्षः ॥

: १३ :

निजान् वयस्यान् प्रतिवेशिनश्च
　साऽबोधयत्स्वं मतमाशु तेऽपि ।
　　अन्यान् वयस्यान् समचक्षत स्वां-
　　　स्ते चाप्यथान्यानवदन् प्रहृष्टाः ॥

: १४ :

अहो ! विचित्रा मतिरिन्दिराया
　ययाऽस्मदीयं सद आविरेति ।
　　इत्थं प्रशंसन्त इमां समेऽपि
　　　बालाः समेताः सुविनिश्चितेऽह्नि ॥

: १५ :

विद्यालयान् स्वान् प्रविहाय तूर्णं
　ते श्रोतुकामा वच इन्दिरायाः ।
　　किन्न्वद्य सा वक्ष्यति नेहरूणां
　　　कुले प्रजातेति कुतूहलेन ॥

: १६ :

नियन्त्रणं तेषु बभूव नेति
　सांराविणं ते महदेव चक्रुः ।
　　उदीरितं यत्नत इन्दिराया
　　　वचोऽपि सम्यग् जगृहुर्न ते च ॥

: १७ :

सूक्ष्मो ध्वनिर्दूरतरं कथं नु
यायाच्च गृह्णन्तु च तं कथं नु ।
बालाः समेता इति चिन्तयाऽसा-
वुपायसन्दर्शनकामुकाऽभूत् ॥

: १८ :

एको दृढाङ्गोऽभवदत्र बालो
विमुक्तकण्ठस्तमयोजयत्सा ।
वाचो निजायाः खलु सङ्क्रमाय
सोऽप्याख्यदन्यं स परं क्रमेण ॥

: १९ :

एवं समैरर्थ्यमिदं वचोऽस्या
बालैः समासीत्सुकरं ग्रहीतुम् ।
दूरध्वनिक्षेपणयन्त्रकार्य-
मेवं वितेने कुशलैः कुमारैः ॥

: २० :

कृत्यानि तावत्सुतरां कठोरा-
ण्युपायसाध्यानि भवेयुरेव ।
नोद्योगमात्रं फलसिद्धिहेतु-
स्तत्रास्त्युपायोऽपि समेषणीयः ॥

: २१ :

एतेन तावत्स्फुरितेन सद्य
उपायवर्येण समे कुमाराः ।
जवाहरस्य प्रियपुत्रिकाया
अलप्सतार्थ्यं वच इन्दिरायाः ।।

: २२ :

यदा वचः कर्णगतं बभूव
तस्याः कुमार्या अभवत्तदैव ।
सांराविणं शान्तिमुपेतमस्याः
शान्तिः पदं चेतसि च न्यधत्त ।।

: २३ :

बालैस्तु यद्यत्करणीयमास्त
न्यक्षेण तत्तत्सकलं जगाद ।
सूक्ष्मेण बाला प्रतिभाविलासे-
नात्यद्भुतं कार्यमसौ चकार ।।

(आर्यावृत्तम्)

: २४ :

इत्थं घटयित्वासौ
बालानां नूतनसङ्घटनम् ।
अनवाप्तकांग्रेससदस्यताकाऽपि
यावच्छक्ति देशकार्यमकरोत् ।।

: २५ :

तामनुगताश्च बाला-
स्तस्या उक्तिं प्रमाणयन्तो हि ।
विधिना स्वेन व्यदधुः
साहाय्यं ज्येष्ठवर्गस्य ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये-
ऽष्टमः सर्गः ॥

(आर्यावृत्तम्)

: १ :

ते सन्देशं निन्युः
स्थानात्स्थानान्तरं त्वरितम् ।
बाला इति कृत्वैवा-
धिकृतैरुपेक्षिताः सन्तः ॥

: २ :

क्वचन क्रीडनसक्ताः
सप्ताष्टास्ते भृशं निपुणाः ।
संवादं श्रुतवन्तो
रक्षिजनैर्मिथः कृतं स्वैरम् ॥

: ३ :

तस्याभिप्रायं द्राग्
बुद्ध्वा कुशलाः स्वके कृत्ये ।
कार्यमनन्तरकृत्यं
ते सम्यङ् निश्चिक्युराश्वेव ॥

: ४ :

संवादे बहुधा ते
रक्षिजना अशङ्किता जगदुः ।
सम्भवि कस्य ग्रहणं
कस्मिन्नहनि वा च तद् भविता ॥

: ५ :

तच्छ्रुत्वा ते
सर्वथोपेक्षिता रक्षिभिर्बालाः ।
तत्स्थानासन्नस्था
विदितरहस्यास्ततोऽपययुः ॥

: ६ :

यस्य ग्रहणं पुंस-
श्चिन्तितमभूदधिकृतैः पुम्भिः ।
त्वरया परयोपेता
निभृतं तं ते सूचयामासुः ॥

: ७ :

लब्ध्वा ततः प्रवृत्तिं
स्वस्य ग्रहणस्य बालकेभ्यो द्राक् ।
स्थानात्स्वस्मादपर-
मपचक्राम स त्वरितम् ॥

: ८ :

अन्यच्चापि रहस्यं
विविधं कुमारका जगृहुः ।
देशस्वातन्त्र्यार्थे
ऽभिरता ज्येष्ठांश्च निवेदयामासुः ॥

: ९ :

इत्थं चक्रुरनेक-
विधं कर्म सहायतार्थं ते ।
नूनं यदभूत्सुतरां
दुष्करमितरैर्हि संशये पतिताः ॥

: १० :

तेषां प्रशशंसैतत्
कर्म विचित्रं जवाहरस्य पिता ।
अन्ये चापि सदस्याः
कांग्रेसाख्यस्य सदसोऽग्र्याः ॥

: ११ :

अभ्यष्टुवंश्च सुतरां
प्रियदर्शिन्याः संघटनशक्ति ते ।
नेतृत्वं च तथाऽस्या
मुग्धाः प्रशशंसुरत्यन्तम् ॥

: १२ :

सङ्घटनस्य स्वस्य
स्यात्कि नामेति जिज्ञासमाना ।
दिवसे कुत्रचनैषा
मातरमुपगम्य पप्रच्छ ॥

: १३ :

किन्नामाम्ब ! भवेन्मे
सङ्घटनं नूतनं ब्रूहि ।
स्निग्धा मय्यसि भूयः
कुशला च कुशाग्रधीश्च त्वम् ॥

: १४ :

ईषत्स्मितं प्रकृत्य
वानरसेनेति नाम सोचे द्राक् ।
कार्यं नो नो जननी
बहु मन्यत इत्यतोऽभवन्मतिस्तस्याः ॥

: १५ :

विमनायितां मनाक् तां
परिलक्ष्याम्बा मनस्विनीमाह ।
न सुते ! नाम्नानेन
खेदस्ते मानसे भवतु ॥

: १६ :

पूर्वं युद्धे यद्वद्
वृत्ते रामस्य रावणेन सह ।
रामस्यासीद्विहिता सहायता
वानरैस्तथैव क्रियते नस्त्वया च त्वद्वयस्यैश्च ॥

: १७ :

अत एवाहमभिख्यां
वानरसेनेत्यवोचं ते ।
नात्र ममोपेक्षाऽस्ति
पुत्रि ! विज्वरं ते मनो भवतु ॥

: १८ :

एतद्वचो जनन्या
हितं च प्रियं च मधुरं च ।
संक्षोभशल्यपीडां
हृदयात्त्वरितमपाकरोदस्याः ॥

: १९ :

वानरसेनाकीर्तिः
कालेन प्रसृताऽजनि दूरतो दूरम् ।
चेष्टाभिश्च निजाभिः
सेनेयं वञ्चयामास रक्षिजनान् ॥

: २० :

नेत्र्यस्याः सेनाया
दृढसङ्कल्पेन्दिरा सतां धुर्या ।
अहमपि निजदेशार्थं
किमपि करोमीत्यधात्परां तुष्टिम् ॥

: २१ :

अबला वा कृशकाया
वा कथञ्चिदपि नैव जनाः ।
रोद्धुं शक्या दृढसङ्कल्पाः
प्रबलानि गिरिणदीजलानि यथा ॥

: २२ :

एवं दृढसङ्कल्पा
बाल्येऽप्यबालभावाऽसौ ।
निजसङ्कटनाशक्तिं
सुतरां प्रकटीचकार कार्यपटुः ॥

: २३ :

पित्रा मात्रा पितृ-
ष्वसृभ्यामन्यैश्च पिताहमाद्यैः स्वैः ।
अनुसृतमध्वानं सा
बालाऽप्यनुससार तन्वङ्गी ॥

: २४ :

दृढता सङ्कल्पस्य
पटुता बुद्धेश्च कौशलं कृत्ये च ।
एते गुणाः समस्ता
आविरभवन् कुलक्रमागता अस्याम् ॥

पितृभ्यां सङ्गता वानरसेनावेषधारिणी इन्दिरा प्रियदर्शिना

वानरसेनाकीर्तिः
कालेन प्रसृताऽजनि दूरतो दूरम् ।
नेत्र्यस्याः सेनाया
दृढसङ्कल्पेन्दिरा बभूव कार्यपटुः ॥

६.१९-२०.
(ईषत्परिवर्त्य)

(उपजातिवृत्तम्)

: २५ :

स्वतःप्रकाशो गुणराशिरस्या
बभूव दिव्यप्रतिभानवत्याः ।
अलौकिकानां खलु सर्वमेव
ह्यलौकिकं स्यादिति नात्र चित्रम् ।।

।। इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
नवमः सर्गः ।।

(उपजातिवृत्तम्)

: १ :

अत्रान्तरे तज्जननी कृशाङ्गी
सत्याग्रहाद्यैर्बहु कष्टजातैः ।
क्षीणा कृशा जर्जरदेहयष्टिः
क्षयाख्यरोगस्य वशं प्रपन्ना ॥

: २ :

अक्षीयतैवानुदिनं मनस्वि-
न्यनेन रोगेण भयङ्करेण ।
वक्त्रच्छविः पाण्डुरभूच्च पक्षे
शशाङ्कलेखेव सितेतरेऽस्याः ॥

: ३ :

आरोग्यलाभाय ततः श्लथाङ्गी
शर्मण्यदेशं प्रति सा जगाम ।
श्यामाभिधानेषु वनेषु तत्र
सुतासमेता वसतिं चकार ॥

: ४ :

दीर्घाणि दीर्घैस्तरुभिर्युतानि
ग्रामैः पुरैश्चान्तरितानि तानि ।
विश्रामकामैः श्रमकर्शितैर्वा
नानाजनैश्चापि समाश्रितानि ॥

: ५ :

झरैश्च रम्यैरनुनादितानि
सुखं गवाध्यासितशाद्वलानि ।
जलप्रवाहैः परिशोभितानि
स्रोतस्विनीभिश्च विभूषितानि ।।

: ६ :

बहूनि तावत्खलु योजनानि
मनोज्ञरूपाणि सुविस्तृतानि ।
नेत्रद्वयासेचनकानि सन्ति
वनानि शक्तेः परिवर्धकानि ।।

: ७ :

तेष्वस्ति रम्यं सुखदं च नृणां
स्थानं शुभं बादनवाय्लराख्यम् ।
तत्रैव कस्मिंश्चन गेहकेऽसा-
वुवास रोगोपहता कथञ्चित् ।।

: ८ :

दूरे गृहात्सा स्थितिमादधाना
पत्युर्वियोगेन भृशं प्रदूना ।
सुदुःखितैकान्तनिवासहेतोः
स्वास्थ्यं न लेभे रुचिरेऽपि देशे ।।

: ९ :

न केवलं नैव बभूव तस्याः
स्वास्थ्यस्य लाभः कलयाऽपि तत्र ।
क्षयाख्यरोगस्य वशात्त्वमुष्याः
क्षयः शरीरस्य भृशं प्रवृत्तः ।।

: १० :

कङ्कालशेषाऽतिकृशाङ्गयष्टि-
स्तेजस्विनी शुष्कशमीलतेव ।
शय्यां गता धूसरवक्त्रकान्तिः
प्रभातकल्पा रजनीव साऽऽभात् ।।

: ११ :

शोच्यां स्थितिं साधु विलोक्य तस्या-
श्चिन्तां गताऽतिप्रबलां कुमारी ।
दूरस्थिता जन्मभुवोऽसहाया
तातं मनः सूचयितुं बबन्ध ।।

: १२ :

अकालहीनं प्रजिघाय विद्युत्-
सन्देशमेषा पितरं विधिज्ञा ।
वृत्तं जनन्याः खलु यत्र सर्वं
समासतः सा निबबन्ध सम्यक् ।।

: १३ :

सम्प्रार्थयामास च सा दृढं तं
शर्मण्यदेशं समुपेहि तूर्णम् ।
न नाम जीवेच्चिरमम्बिका मे
चिन्तेति तस्या हृदयं ममन्थ ॥

: १४ :

सन्देश एषोऽधिगतोऽभवत् प्राक्
विदेशजातैरधिकारिभिर्द्राक् ।
कारागृहे रोधमिताय चायं
दत्तोऽविलम्बेन जवाहराय ॥

: १५ :

मुक्तस्ततोऽसौ च निजान्गृहांश्च
सम्प्रापितः, प्रास्थित तूर्णमेव ।
शर्मण्यदेशं प्रति, यत्र विज्ञः
पत्न्या च पुत्र्या च समन्वितोऽभूत् ॥

: १६ :

स्थितोऽभवद् बादनवाय्लराख्ये
स्थाने स ताभ्यां सहितो मनस्वी ।
न चाप्यपश्यत् कलयाऽपि पत्न्याः
स्वास्थ्यं प्रियाया विदुषां वरेण्यः ॥

स्विटज़रलैण्डदेशस्था इन्दिरा प्रियदर्शिनी

देशान्तरे स्वास्थ्यमियं लभेत
पत्नी मदीयेति विचिन्त्य विज्ञः ।
सम्प्राप्तवानेष सुतासमेतो
देशं वरं स्विटज़रलैण्डमाशु ॥
१०.१७,

: १७ :

देशान्तरे स्वास्थ्यमियं लभेत
पत्नी मदीयेति विचिन्त्य विज्ञः ।
सम्प्राप्तवानेष सुतासमेतो
देशं वरं स्विटज़रलैण्डमाशु ॥

: १८ :

यदीयसौन्दर्यमतीव हारि
यद्वैभवं लोचनयुग्मलोभि ।
योरूपभूमण्डलमध्यवर्ती
यो भात्यहो ! नन्दनतुल्यरूपः ॥

: १९ :

अकृष्टपच्यं खलु यत्र सस्यं
रम्यास्तथा शाद्वलभूमिभागाः ।
पूर्णाः फलानां तरवोऽतिनम्रा
उद्यानजातानि समृद्धिमन्ति ॥

: २० :

यदीयनद्यो जलराशिपूर्णा
यदीयदृश्यानि मनोरमाणि ।
यदीयवाताः शिशिराश्च हृद्या
आगन्तुकानां रमयन्ति चेतः ॥

: २१ :

एल्प्साभिधानाः प्रथिताः पृथिव्यां
सदा हिमाच्छादिततुङ्गशृङ्गाः ।
यस्योपकण्ठे वलया गिरीणां
सौन्दर्यमाश्चर्यकरं वहन्ति ॥

: २२ :

दिव्या यदीया सुषमाऽद्वितीया
नेत्रद्वयासेचनिका चकास्ति ।
जना हृतान्तःकरणा ययाऽहो !
स्वस्यैव सत्तां ननु विस्मरन्ति ॥

: २३ :

देशस्य रम्यस्य तथाविधस्य
पुरे शुभे लाउसननामके सा ।
पत्या च पुत्र्या च समं निनाय
रुग्णाऽपि कालं कमला सुखेन ॥

: २४ :

स्वास्थ्यं शरीरस्य समाससाद
मनःप्रसादं च मनस्विनी सा ।
न केवलं देशविशेषवासो
न वौषधं तत्र बभूव हेतुः ॥

: २५ :

भर्त्रा च पुत्र्या च समं निवासः
सङ्गस्तयोस्तत्र निरन्तरश्च ।
स्नेहस्तयोस्तां प्रति च प्रकृष्टो
हेत्वन्तरत्वं समियाय तत्र ॥

: २६ :

विदेशवासेन न मातुरेव
बभूव लाभः सुतरामकल्प्यः ।
तातस्य सङ्गेन बभूव लाभः
पुत्र्या अपीत्यत्र न काऽपि शङ्का ॥

: २७ :

पिता कदाचित्तयका सहैव
सङ्क्रीडनं सद्रुचिमांश्चकार ।
सार्धं कदाचिच्च तया स विज्ञः
संलापसौख्येन निनाय कालम् ॥

: २८ :

तस्यै कदाचिच्च जगाद रुच्याः
कथा अनेकाः कथने प्रवीणः ।
निशम्य या मोदमवापदेषा
बोधं च लोकैरितरैरनाप्यम् ॥

: २९ :

पिता बभाषे तनयां निजां तां
यद्यत्पुरा वृत्तमभूत् पृथिव्याम् ।
अशोकनामा नृपतिः कथं वा
शशास पृथ्वीं जनताहिताय ॥

: ३० :

कथं च वा मोगलवंशजातः
साम्राज्यभाजां धुरि कीर्तनीयः ।
अक्बर्समाख्यः पृथिवीं शशास
धर्मं च नूत्नं प्रकटीचकार ॥

: ३१ :

ये ये पुराऽऽसन् भुवि लब्धवर्णा
जनाः स तान् वर्णितवान् सुतायै ।
नानाविधानां च स सभ्यताना-
मादिं तथाऽन्तं च जगाद विज्ञः ॥

: ३२ :

शुश्राव चैषाऽवहिता प्रवाचः
पितुः स्वकीयस्य मनोज्ञवाचः ।
मनोविनोदेन समं च कन्या
कुशाग्रधीर्ज्ञानमपूर्वमाप ॥

: ३३ :

बभूव विद्याभ्यसनं कुमार्याः
साक्षात्पितुः प्रत्यहमेवमेव
तोषः परस्तेन बभूव तस्याः
सङ्गं समासाद्य पितुः प्रियस्य ॥

: ३४ :

प्रयागपुर्यां बहुशः पिताऽस्या
नीतोऽभवद् बन्दिगृहं वदान्यः ।
ततो वियुक्ता बहुकालमेव
बभूव कन्येयमनन्यरूपा ॥

: ३५ :

सत्याग्रहादिष्वथ तत्र कृत्ये-
ष्वनारतं स्वं समयं नयन्ती ।
माताऽपि नो सङ्गतिभाग्बभूव
तस्या इति क्षोभ इवास्त चित्ते ॥

: ३६ :

देशे पुनः स्विटज़रलैण्डनाम्नि
स्वात्मार्थमेव प्रतिभावतीयम् ।
उभावपि स्निग्धतराववाप्य
सन्तोषकोटिं परमां जगाम ॥

: ३७ :

माता च तस्याश्च पिता प्रियश्चे-
त्युभावभूतामधुना समीपे ।
तस्या इति प्रासरदन्तरङ्ग-
सरोवरे मोदतरङ्गभङ्गः ॥

: ३८ :

एवं विनीता विविधं विनीता
कथादिकैर्ज्ञानचये, प्रतीता ।
देशे सुखं कालमियं निनाय
बालेन्दिरा स्विटज़रलैण्डनाम्नि ॥

: ३९ :

(तोटकवृत्तम्)

पितृसङ्गतिमाप्य भृशं मुदिता
विबुधप्रवरेयमपूर्वमतिः ।
कमनीयतमाकृतिरप्रतिमा
रमणीयतमां भुवमध्यवसत् ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
दशमः सर्गः ॥

(उपजातिवृत्तम्)

: १ :

आयासभूयस्त्वमभूत् किलास्या
मातुः प्रियायाः क्षयरोगहेतुः ।
दिने दिने ग्रीष्मऋतावपीयं
सत्याग्रहार्थं गृहतो जगाम ।।

: २ :

अथैकदा यात्नवती कृशाङ्गी
विद्यालयं कञ्चन वारणाय ।
विद्यार्थिनां पाठविधेर्विदेश्यात्
तपर्तुतापस्य वशं गताऽभूत् ।।

: ३ :

चिरं बहिर्द्वारगता तु तस्य
मध्याह्नकाले प्रखरातपे सा ।
बिन्दुं जलस्यापि न विन्दमाना
संशुष्ककण्ठी च तृषाकुला च ।।

: ४ :

भूत्वा विसंज्ञा निपपात भूभौ,
तां तादृशीं केचन वीक्ष्य धृष्टाः ।
भित्तिस्थिता हासपरा बभूवु-
र्विद्यार्थिनश्चापि दयां न चक्रुः ।।

: ५ :

रम्याकृतिस्तेषु बभूव कश्चित्
स्वस्थो विनेयो मृदुलस्वभावः ।
कष्टश्रितां तामवलोक्य यस्तु
बभूव सत्यं करुणार्द्रचेताः ।।

: ६ :

अवातरत्तत्क्षणमेव भित्ते-
र्विपद्गतामभ्यवपत्तुकामः ।
योषिद्वरां तां समुपेक्ष्य सर्वान्
निजान् सतीर्थ्यान् हसतः स धृष्टान् ।।

: ७ :

कष्टं परस्यापि विनोद एव
येषां जनास्तेऽधमकोटिभाजः ।
ये त्वेव भूयो द्रुतमानसास्ते
भवन्ति तत्रोत्तमकोटिभाजः ।।

: ८ :

यथाकथञ्चित् खलु लम्भयित्वा
सञ्ज्ञामयं तां विविधैरुपायैः ।
सम्प्रापयामास गृहं तदीयं
सा चाऽपि तं पुत्रवदेव मेने ।।

: ९ :

अतोऽनु तद्दर्शनलालसोऽसा-
वनेकशस्तद्गृहमाजगाम ।
तस्याश्च तद्बन्धुजनस्य चापि
स्निग्धः स कालेन बभूव बालः ॥

: १० :

निरन्तरं तस्य गतागताभ्यां
सम्पर्कसूत्रं सुदृढं बभूव ।
प्रियो बभूवैष च नेहरूणां
हार्दी स्वयं चैष बभूव तेषु ॥

: ११ :

सम्पर्कसूत्रे दृढतामुपेते
ज्येष्ठैः कुमारस्य सहास्य तावत् ।
कुशाग्रबुद्ध्येन्दिरयाऽपि साकं
सम्बन्ध आभाषणपूर्वकोऽभूत् ॥

: १२ :

सा चाऽपि बालाऽभवदेष चापि
बालस्ततस्तद्वशतः प्रजातः ।
सम्बन्ध आसीदतिहृद्यरूपो
ऽनयोर्गतो यः समयेन वृद्धिम् ॥

: १३ :

नासीद्यतस्तद्वयसा समोऽस्याः
कश्चित्कुमार्या गृह इन्दिरायाः ।
एकाकिनी सा भृशदुःखिता स्वं
ततः कथञ्चित्समयं निनाय ॥

: १४ :

सम्प्रत्यसौ सङ्गतिमाकलय्य
कुमारकस्यास्य मनोऽनुकूलाम् ।
एकाकिनीत्वार्तिहरां च हृष्टा
चर्चासु नैकास्वभवत्प्रवृत्ता ॥

: १५ :

बालस्य नामाभवदस्य हृद्यं
फ़ीरोज़गान्धीति कुशाग्रबुद्धेः ।
जातस्य पारस्यकुले प्रसिद्धे
गौराङ्गयष्टे रुचिराकृतेश्च ॥

: १६ :

नीता यदा स्विटज़रलैण्डदेशं
रोगोपचाराय जनन्यमुष्याः ।
विशिष्टशिक्षार्थमयं तदैवै-
दिंग्लैण्डदेशं मतिमान् कुमारः ॥

: १७ :

देशावुभौ योरुपभूमिभागे
स्थिताविति द्रष्टुमतिस्तदम्बाम् ।
इंग्लैण्डदेशाद् व्रजति स्म सैष
वशंवदः स्विटज़रलैण्डदेशम् ।।

: १८ :

दिनेषु सप्तस्वयमेकवारं
ध्रुवं समायात्किल तत्र वश्यः ।
जवाहरेणेन्दिरया च साकं
तदम्बया चापि निनाय कालम् ।।

: १९ :

सम्बन्ध एवं द्रढिमानमाप्तो
बभूव कालेन कुमारकस्य ।
पारस्यवंश्यस्य कुटुम्बकेन
सुखप्रदो नेहरुवंशजानाम् ।।

: २० :

सम्बन्ध एवं द्रढिमानमाप्ते
फ़ीरोज़गान्धेर्हृदये तथा च ।
चित्ते कुमार्या मृदुनीन्दिरायाः
परस्परं प्रेम पदं न्यधत्त ।।

: २१ :

न चोचतुस्तौ वचसा स्वकामम्
आलक्ष्यमेतत् व्यवहारतोऽभूत् ।
परस्परेण स्पृहणीयशोभं
तद् द्वन्द्वमायोजितमास्त धात्रा ॥

: २२ :

काले प्रयात्येवमहो ! सुखेन
यूनोर्मिथो रागवशान्मनोज्ञे ।
विनिश्चयोऽभूत्पितुरिन्दिरायाः
स्वं देशमागन्तुमथान्तरायः ॥

: २३ :

अनेहसं नैव समर्थ आसी-
त्स्थातुं विदेशे बहुमेष विज्ञः ।
कार्यं स्वदेशेऽभवदस्य भूयः
कार्यान्तरेभ्यो यदभूद् गरीयः ॥

: २४ :

अतोऽनुरोधादयमस्य विद्वान्
रुग्णां स्वपत्नीमपि साधु विद्वान् ।
विहाय तां पुत्रिकया समेतां
देशं शुभं स्वं प्रियमाससाद ॥

: २५ :

स्वदेशमाप्तश्च महामनीषी
स निग्रहं प्रापित आस्त सद्यः ।
मुक्तश्च कालेन पुनश्च बद्ध
इति क्रमस्तस्य कृते प्रवृत्तः ।।

(द्रुतविलम्बितवृत्तम्)

: २६ :

अथ गते क्रम एवममङ्गले
क्व नु सुता लभतां मम शिक्षणम् ।
इति विचिन्त्य विचिन्त्य सुधीरयं
क्षणमपि क्षणमध्यगमन्नहि ।।

।। इति डा०सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
एकादशः सर्गः ।।

(द्रुतविलम्बितवृत्तम्)

: १ :

बहुतिथं समयं प्रविचारयन्
गुरुरवीन्द्रकवीन्द्रकृते शुभे ।
प्रणिजिघाय स शान्तिनिकेतने
स्वतनयामतनुप्रतिभायुताम् ।।

: २ :

प्रकृतिसुन्दरमक्षियुगप्रियं
विहगसङ्घनिनादितदिक्तटम् ।
विविधशाखियुतं कुसुमोत्करैः
सुरभितं सुमनोहरमद्भुतम् ।।

: ३ :

द्रुमलतापरिशोभि समन्ततो
भ्रमरसन्ततगुञ्जितकुञ्जकम् ।
उदितकोकिलपञ्चमनिःस्वनं
रुचिरकेकिकलापमनोहरम् ।।

: ४ :

क्वचन वृक्षतलेऽध्ययने रतै-
र्बटुजनै रुचिरं प्रियवादिभिः ।
क्वचन नृत्यविधिप्रसिताङ्गना-
चरणनूपुरनिक्वणनाकुलम् ।।

: ५ :

सुकविता सुकवेरिव कस्यचित्
सुघटिता प्रतिमेव सुशिल्पिनः ।
सुरमणीयमृषेरिव दर्शनं
लसति शान्तिनिकेतनमद्भुतम् ।।

: ६ :

उपगताऽध्ययनार्थमिदं शुभं
निजसतीर्थ्यसुसङ्गतिहर्षिता ।
विनयपूर्वमुवास कुशाग्रधीः
क्वचन वेश्मनि छात्रसुखे त्वियम् ।।

: ७ :

अतिविचित्रजवाहरकन्यका-
ध्ययनवृत्तमिदं कुतुकाकुलाः ।
अकृत शान्तिनिकेतनवासिनीः
सुकृतिनीः सकला अपि कन्यकाः ।।

: ८ :

प्रथितवंशभवा प्रियदर्शिनी
प्रियजनेन सुखं परिपोषिता ।
अमितवैभवभोगसुखोचिता
कथमिहाश्रमवृत्तिमुपाश्रयेत् ? ।।

: ९ :

क्व नु कठोरमिहाश्रमजीवनं
क्व नु सुखैः सकलैः सह वर्धनम् ।
कृशतनुः सुकुमारवया इयम्
इति जना विविधं प्रबभाषिरे ॥

: १० :

वसतिमत्र चकार यदा पुनः
स्वयमियं निजकर्म चचार च ।
व्यवजहार निजासु सखीषु च
स्वसृवदेव विलक्षणधीस्तदा ॥

: ११ :

परिदधे वसने अपरा इव
नियतकालमियं बुबुधे तथा ।
सहचरीजनसङ्गतिभाक् क्रमात्
स्वयममार्ट् विबुधा स्वकुटीरकम् ॥

: १२ :

इति तथा व्यवहारमुपैदियं
नहि यथाऽन्तरमन्वभवत् क्वचित् ।
जन इतीयमभूत् सुतरां प्रिया
गुणगणेन जनः प्रियतामियात् ॥

: १३ :

निजसखीसुखदुःखमियं शुभा
निजगतं तदिति प्रतिपेदुषी ।
गुरुजनैः सुतरां प्रतिपादिता
निपुणतां किल नृत्यकलादिषु ॥

: १४ :

निपुणधीर्निपुणं परिशिक्षिता
सकललोकहिते च रताऽनिशम् ।
सुहृदियं हृदहङ्कृतिर्वजिता
निखिलशान्तिनिकेतनवासिनाम् ॥

: १५ :

रसमयं समयं गमयन्त्यसौ
प्रथितकीर्तिरभात् प्रियदर्शिनी ।
तदनु किञ्चिदहो ! घटितं तथा-
ऽनवसिताध्ययनैव गता यथा ॥

: १६ :

निजगृहान्, प्रविहाय कुमारिका
प्रियतरं खलु शान्तिनिकेतनम् ।
अघटितं घटयेत् प्रबलो विधिः
सुघटितं घटयेच्च स दुर्घटम् ॥

: १७ :

अथ कदाचिदभूत् प्रिय उत्सवो-
ऽभिनवबङ्गशुभाब्दनिमित्तकः ।
रुचिविवर्धिनि शान्तिनिकेतने
सकललोकमनोहर उत्तमः ॥

: १८ :

'कथय रे पथिक ! त्वमिहागतः
कुत' इति प्रथितैः कवितामयैः ।
गुरुरवीन्द्रकवीन्द्रकृतैः प्रियैः
सुवचनैः परिषङ्गतमद्भुतैः ॥

: १९ :

निपुणया परिशिक्षितमेतया
कुतुकिभिः सकलैः समुदीक्षितम् ।
गुरुवशंवदया ह्यकरिष्यत
प्रथितमाणिपुरं खलु नर्तनम् ॥

: २० :

परमभूत्कृतमत्र तया न तत्
प्रबलमस्ति विधेर्हि विचेष्टितम् ।
उपगतः खलु कश्चिदभूज्जनः
समनयच्च कलाभवनादिमाम् ॥

: २१ :

गुरुसमीपम्, उवाच च तामसा-
वधिगतस्तनये ! मयका पितुः ।
तव वचः प्रहितं खलु विद्युता
बुधवराद्विनिरोधमितात्प्रयात् ॥

: २२ :

बलवदस्ति रुजा परिपीडिता
कृशतनुर्जननी तव पुत्रिके !
त्वरितमेव ततः समुपेहि तां
कुरु न पुत्रि ! चिरं, शृणु मे वचः ॥

: २३ :

इति पितुर्वचनं श्रुतिदुःखदं
समधिगम्य भृशं विमनाः सती ।
सपदि शान्तिनिकेतननामकं
प्रणिजहावियमाश्रममुत्तमम् ॥

: २४ :

सकलतत्स्थजनोऽभवदाप्य चा-
प्रियमुदन्तमिमं भृशदुःखितः ।
कथमहो ! सुखदुःखपरम्परा
मिथ इहानुगता परिलक्ष्यते ॥

: २५ :

कतिपयानि दिनान्यभवत्पुरो-
त्सवकृतो ननु यत्र मुदां भरः ।
अभवदेव वियोगकृतोऽधुना
विधिवशादयि ! तत्र शुचां भरः ॥

: २६ :

'कथय रे पथिक ! त्वमिहागतः
कुत' इति प्रतिकूलमलक्ष्यत ।
कविवरस्य वचः स्वगृहान् यदा
गतवती कृतिनी गुणिनीन्दिरा ॥

: २७ :

विधिवदध्ययनं समुपागतम्
इति समाप्तिमतः परमस्यकाः ।
स्वजनकेन निरन्तरसङ्गती
रुचिरमध्ययनं समवर्तत ॥

: २८ :

उपगता जनकेन निजं गृहं
समलपन् बहुनेतृवरा यदा ।
मतिमती निकटस्थितिभाक् तदा
सकलसंलपनं श्रवणेऽकरोत् ॥

: २९ :

यदि पिता दिशि दिश्यगमत् प्रियो
नियतमेव स तामनयत् समम् ।
यदि स कञ्चिदपि प्रथितं जन-
मुपजगाम बभूव सहैव सा ।।

: ३० :

पितरि योरुपभूमिमुपेतव-
त्यथ कदाचन तत्सहितैषका ।
उपगता प्रथितान् विदुषां वरान्
रुमियरोलनिभानपरांस्तथा ।।

: ३१ :

इति निरन्तरसङ्गतिभागियं
स्वजनकस्य कुशाग्रमतिर्मता ।
बहुविधं विषयं परिशृण्वती
नियतमेव बभूव बहुश्रुता ।।

: ३२ :

इति सुखं समयं गमयन्त्यसौ
परिबभौ विदुषीति पितुः प्रिया ।
न च सुखं बहुकालमवस्थितं
तदभवत्, प्रबलं विधिचेष्टितम् ।।

: ३३ :

अथ कथञ्चिदवाप्तसुखस्थितिः
प्रतिगता कमला परदेशतः ।
निजगृहान् न चिरं प्रकृतौ स्थिता
क्षयमुपैदिव चान्द्रमसी कला ॥

: ३४ :

प्रतिदिनं क्षयमेवमुपेयती
कृशतनुः क्षयरोगवशं गता ।
विलपतः परिहाय निजान् प्रियान्
स्वसुकृतार्जितलोकमियं ययौ ॥

(उपजातिवृत्तम्)

: ३५ :

मात्रा वियोगोऽभवदिन्दिराया
वज्रप्रहारोपम एव तावत् ।
शोकार्णवे घोरतरेऽपि मग्ना
धैर्यं न सा धैर्यधना मुमोच ॥

: ३६ :

पिता जनन्याः किल मृत्युकाले
तस्या बभूवाधिकृतैर्निरुद्धः ।
मुक्तः पुनस्तैरधिगत्य वृत्तं
शोकाकुलः स्वं गृहमाससाद ॥

(उपजातिवृत्तम्)

: १ :

जवाहरो बन्दिगृहे बभूव
यदाऽस्य भार्या यमलोकमाप ।
तत्रैव घोरं समवाप तावद्
वज्रप्रहारोपममेष वृत्तम् ॥

: २ :

मग्नो विषादाम्बुनिधौ विपश्चित्
कोटीश्वराणां धुरि कीर्तनीयः ।
नेता जनानां भुवि कोटिशोऽपि
नालं मनःसंयमने बभूव ॥

: ३ :

सस्मार सर्वं प्रियमेष वृत्तं
पत्नी प्रिया तस्य परं बभूव ।
तस्या अनस्तित्वविचार एव
बभूव हा ! तस्य भृशं ह्यसह्यः ॥

: ४ :

एवंविधं तं जनतापुरोगं
पत्नीवियोगेन विदूनचित्तम् ।
कठोरचित्ता अधिकारिणोऽपि
हन्त ! स्वयं बन्धनतो व्यमुञ्चन् ॥

: ५ :

मुक्तश्च तूर्णं स्वगृहानुपेतः
स्वं पर्यवस्थाप्य यथाकथञ्चित् ।
पत्न्याः प्रियाया अकरोद्विधिज्ञः
सर्वाः क्रिया औत्तरदेहिकीः सः ॥

: ६ :

ततो विपश्चिन् निजदेशकार्ये
व्यापारयामास स सर्वतः स्वम् ।
पत्नीवियोगेन विदूनचेता,
विनोदयामास निजं च दुःखम् ॥

: ७ :

कार्यान्तरासक्तमना अपि स्व-
पत्नीस्मृतिं स्वस्य दधौ स चित्ते ।
किञ्चिच्छरीरस्य च भस्म तस्या
असौ दधारात्मनि यावदायुः ॥

: ८ :

स्वस्थोऽपि तावत्तरुणोऽपि विद्वान्
सुदर्शनश्चापि जनस्य गृह्यः ।
नान्यामुपायंस्त गुणी स भार्याम्
आस्तैकपत्नीव्रतमेव तस्य ॥

: ९ :

लोकोत्तरा नैव जनाः कदाचिच्
चेष्टां स्वकां प्राकृतवत्प्रकुर्युः ।
अनन्यसामान्यविभूतिकानि
तेषां चरित्राणि भवन्ति लोके ॥

: १० :

मृत्योः परस्तात् कमलाह्वयायाः
पत्न्याः स्वकस्या अभवत् सुबद्धः ।
देशे प्रिये स्वे च तथा स्वकायां
सुतोत्तमायां प्रबलोऽनुरागः ॥

: ११ :

परं स्वदेशे जनताहिताय
बम्भ्रम्यमाणो विदुषां वरेण्यः ।
नापेक्षितं कालमसाववाप
स्थातुं स्वकाया निकटे सुतायाः ॥

: १२ :

पुरात्पुरं ग्राममथापि धीरो
ग्रामादटँल्लब्धयशाः पृथिव्याम् ।
सम्बोधयामास जनाननेकान्
स लक्षशश्चापि च कोटिशश्च ॥

: १३ :

कथं सहध्वे परशासनं भोः !
सन्तो भवन्तो बहुशक्तिमन्तः ।
इत्यूचिवानर्थवतीमुदारां
जवाहरो वाचमिमां वरेण्याम् ।।

: १४ :

निशम्य यां स्फूर्तिकरीं महार्थां
लक्षाणि लोका अथ कोटयश्च ।
प्राणांश्च दारांश्च धनानि चापि
तृणाय मत्वा स्वगृहात्प्रचेलुः ।।

: १५ :

दुर्धर्षरूपं जनवातचक्रं
तथाऽत्र देशे प्रचचाल वेगात् ।
वैदेशिकः शासनपर्वतोऽपि
यस्य प्रभावाद् बलवच् चकम्पे ।।

: १६ :

एवं स वीरो बहुधा स्वदेशे
बभ्राम लोकान् समबूबुधच्च ।
भ्रान्त्वा च गेहं समुपेयिवान् स्वं
कालं विनिन्ये तनयासमीपे ।।

: १७ :

यदा यदा तन्निकटे स्थितोऽभूत्
तदा तदा सा मुदमाप भूरिम् ।
यद्यप्यगात्तत्र तथा स्थितस्या-
प्येतस्य कार्येष्वितरेषु कालः ॥

: १८ :

यथा तथा वाऽस्तु निजस्य तातस्या-
ऽऽसन्नतास्या अतत प्रमोदम् ।
यच्चिन्तयामास स सर्वमेव
कुशाग्रबुद्धया व्यमृशत्तया तत् ॥

: १९ :

पश्येद् ध्रुवं सूक्ष्ममियं मनस्वि-
नीत्येव तां प्रत्यभवत्तदास्था ।
अथो कदाचित्किल लेखमेकं
बुधाग्रगण्यो निबबन्ध बुद्धया ॥

: २० :

इरावतीतीरगते प्रदेशे
स्वातन्त्र्यशङ्खध्वनितुल्यरूपः ।
आवृत्तिमापादयितव्य एष
बभूव, दारयं प्रविमोक्तुकामैः ॥

: २१ :

लेखं समाप्यैव तदीयभाव-
निर्धारणोत्कः स जगाद पुत्रीम् ।
उच्चैरिमं वाचय पुत्रि ! याव-
देतत्प्रभावं निपुणं परीक्षे ॥

: २२ :

पपाठ सोच्चैः पितुरन्तिकस्था
जगाम तस्यान्तमथो च यावत् ।
दीप्ते अभूतां नयने अमुष्याः
स्फूर्तिः पराऽलक्ष्यत चाप्यमुष्याम् ॥

: २३ :

पठेदिमं योऽपि जनो भवेत्स
तत्पाठमात्रेण धृतप्रतिज्ञः ।
त्वयाऽपि कृत्स्नः पठितोऽयमस्माद्
धृतप्रतिज्ञा तनये ! त्वमप्यसि ॥

: २४ :

एवं स तामुत्स्मयमान आह
पिता स्वपुत्रीं परिहासशीलः ।
रतो गुरौ कार्यभरेऽप्यवोचद्
गूढा गिरोऽसौ परिहासपूर्णाः ॥

: २५ :

उच्चारणीयानि दिने प्रतिज्ञा-
वचांसि षड्विंश इमान्यभूवन् ।
मासस्य जन्वर्यभिधस्य लोकैः
सहस्रशो भारतभूमिजातैः ॥

: २६ :

स्वातन्त्र्यमाप्नोन्नहि यावदेष
देशः प्रतिज्ञावचनान्यवोचत् ।
तस्मिन्दिने तेन गतं प्रसिद्धिं
स्वतन्त्रताया दिनमित्यभूत्तत् ॥

: २७ :

देशोऽयमस्मास्वधि तावदस्तु,
यथा स्वतन्त्रा इतरे स्वदेशे ।
तथा वयं स्याम सुखं स्वदेशे
तत्प्राप्तुमद्यावधि नोऽस्तु यत्नः ॥

: २८ :

कृतस्य तावत् कठिनश्रमस्य
फलं वयं भोक्तुमलं भवेम ।
इत्येव कामोऽस्ति मनोगतो नो
नैवापरस्तत्फलमश्नुवीत ॥

: २६ :

यच्छासनं तत्प्रतिकूलगामि
　भवेद् ध्रुवं तत्परिवर्तनीयम् ।
सङ्कल्प एषोऽस्ति दृढः समेषां
　नास्त्यत्र संशीतिलवोऽपि कश्चित् ।।

: ३० :

इमान्यनेकानि बबन्ध वीरः
　पिता प्रतिज्ञावचनानि तस्याः ।
पपाठ यानि प्रतिवर्षमेव
　जनः स्वदेशार्थसमर्पितात्मा ।।

: ३१ :

(पुष्पिताग्रावृत्तम्)

अपठदियमहो ! यथा प्रबुद्धा
　जनककृतं रुचिराक्षरार्थलेखम् ।
अभवदवगतोऽनुरागभारः
　सपदि निजां प्रति जन्मभूमिमस्याः ।।

।। इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
त्रयोदशः सर्गः ।।

(स्वागतावृत्तम्)

: १ :

शिक्षणं प्रसरति स्म न तस्याः
शैशवेऽप्रतिमबुद्धियुतायाः ।
इत्यभून्मनसि हन्त ! नितान्तं
तान्तिरेव विदुषः पितुरस्याः ॥

: २ :

न ह्यसौ किमपि तत्र विधातुं
यत्नवानपि शशाक विषण्णः ।
नैकदा समधिगत्य नृशंसं
निग्रहं स विदधीत कथं वा ? ॥

: ३ :

कञ्चिदेव समयं व्यनयत्सा
पाठशालवरमेकमुपेता ।
शिक्षणं च समवाप्य ततोऽसौ
पाठशालमपरं प्रतिपेदे ॥

: ४ :

अव्यवस्थितमजायत तस्याः
शिक्षणं बलवदेव कुमार्याः ।
अत्र हेतुरभवत् पितुरस्या
निग्रहः खलु पुनः पुनरेव ॥

: ५ :

बन्दिगेहमुपयातवति स्वे
वत्सले पितरि, मातृजने च ।
क्रूरशासनविरोधविधायि-
न्येषकाऽऽचरतु किं सुकुमारी ॥

: ६ :

मुक्तिरास्त जनकस्य यदा तु
शिक्षणं प्रसृतमास्त कुमार्याः ।
अन्यथा तु विरतं समभूत्त-
द्येन दुःखमभवद् भृशमस्याः ॥

: ७ :

एकदा प्रियतमो जनकोऽस्या
मुक्तिमाप बहु चिन्तितवांश्च ।
शिक्षणं भवतु मे प्रियपुत्र्या
भारतीयविधिनैव कथं नु ॥

: ८ :

मोतिलालमतिरास्त विचित्रा
भारतीयविधिरस्य मतो नो ।
प्रादुरास्त जनकस्य च तेन
पुत्रकस्य च महान् मतभेदः ॥

: ९ :

गान्धिनामकमहात्मनि वृत्तं
ज्ञापितं समभवत्सकलं तत् ।
सोऽप्यरोचयत नैव विवादं
पुत्रकस्य च पितुश्च तपस्वी ।।

: १० :

पत्रमेकमपि च प्रजिघाय
तौ प्रति प्रथितबुद्धिबलोऽसौ ।
भारतीयविधिमेव वरेण्यं
प्रत्यपादयत यत्र स धीमान् ।।

: ११ :

तेन शान्तिमगमन्मतभेदः
पुत्रकस्य च पितुश्च सुखेन ।
वस्तुतस्तु न पितामह आस्त
योरुपीयविधिबद्धमनस्कः ।।

: १२ :

केवलं प्रसरतु प्रियपौत्र्याः
साधु शिक्षणमिति प्रतिपद्य ।
स्वं मतं प्रकटितं स चकार
न प्रियं तदितरत्खलु तस्य ।।

: १३ :

कौशलेन गमिते खलु शान्ति
पुत्रकस्य च पितुश्च विवादे ।
प्रावृतत्स्वभुवि शिक्षणमस्या
भारतीयविधिनैव सुचारु ।।

: १४ :

कश्चिदेव समयो गत आसी-
देवमत्र पुनरप्यभवद्धा ! ।
निग्रहोऽसुखकरः पितुरस्या
लोकनायकवरस्य बुधस्य ।।

: १५ :

अव्यवस्थितिवशाच्च कुटुम्ब-
स्याभवन्मुहुरपि व्यवधानम् ।
शिक्षणे प्रखरबुद्धियुतायाः
क्रूरदैववशतः सुकुमार्याः ।।

: १६ :

शासनेन च पिता निगृहीतो
न क्षणं क्षणमपि प्रतिपन्नः ।
कन्यकाहितमनेकविधं च
चिन्तयन् समयमेष निनाय ।।

: १७ :

एकदा तु सुचिरं विनिरुद्धे
बन्दिवेश्मनि जवाहरलाले ।
द्वादशेयमनयत्तनुगात्री
हायनान्यपरमेव गता च ॥

: १८ :

हायने त्वभिनवे प्रविशन्तीं
पुत्रिकां समभिलक्ष्य पिताऽस्याः ।
काञ्चिदैच्छदुपदामुपहर्तुं
हन्त ! जन्मदिवसे मुदमाप्तः ॥

: १९ :

नैव किञ्चिदभवच्च यतोऽस्य
बन्दिगेहविनिरोधमितस्य ।
तेन चिन्तनपरो निजपत्रं
प्राहिणोत्स उपदामथ तस्यै ॥

: २० :

आह वत्सल इमां च विपश्चित्
पुत्रि ! नास्ति मम किञ्चन तुभ्यम् ।
दातुमत्र विषमस्थितिकस्य
तेन पत्रमुपदामधिगच्छ ॥

: २१ :

प्रायशस्त्वमधिगच्छसि रम्यं
जन्मवासर उपायनजातम् ।
बन्धुवर्गत उदात्तमनस्के-
त्येतदस्ति सुतरां विदितं मे ॥

: २२ :

सत्यपीत्थमति शुभ्रमतिस्त्वं
पत्रमेव मम तावदवेहि ।
प्रेमपूरपरिपूरितमद्धा
हृद्विनिर्गतमुपायनवर्यम् ॥

: २३ :

भौतिकं किमपि वस्तु न रुच्यं
प्रेष्यमस्त्यत उपायनरूपम् ।
केवलं स्वहृदयं प्रहिणोमि
पत्रकेण तदुरीकुरु पुत्रि ! ॥

: २४ :

दीर्घदीर्घतरका अपि घोरा
भित्तयोऽपि न निरोद्धुमलं यत् ।
स्थूलसूक्ष्ममुभयं सममेव
स्वीकुरु प्रियमुपायनमेतत् ॥

: २५ :

तत्र पत्रकवरे निबबन्ध
नैकदेशगतमेष उदन्तम् ।
वाचनेन सममेव तु यस्य
ज्ञानभानुरुदितो हृदयेऽस्याः ॥

: २६ :

पत्रकप्रहयणात्प्रथमादा
वत्सलः किल जवाहरलालः ।
पुत्रिकां प्रति निजां प्रजिघाय
स्वस्य कालबहुलत्वमपेक्ष्य ॥

: २७ :

पत्रकाणि समये समयेऽसा-
वद्भुतानि रुचिवृद्धिकराणि ।
दीर्घदीर्घतरकेषु च तेषु
ज्ञानराशिमतुलं निदधे च ॥

: २८ :

तत्र वर्णितमभूद्विबुधेन
विश्ववृत्तमखिलं निपुणेन ।
आऽऽत्मनः समयतः खलु सृष्टेः
प्रक्रमाद् यदभवद् गतमुर्व्याम् ॥

: २९ :

तत्र वर्णनमभून्नृपतीनां
दिग्जयार्थसततातभिरतानाम् ।
लोकसङ्ग्रहकृतामथवा त-
त्तत्कलाकुशलशिल्पिजनानाम् ॥

: ३० :

एवमेव खलु वर्णित आस्त
चित्रकारनिकरोऽत्र यशस्वी ।
धर्मदर्शनविधौ च धुरीणा
वर्णिता बुधजना इह रेजुः ॥

: ३१ :

युद्धजातमभवद्विविधं यद्
यच्च हिंसनमभूद् बहु तत्र ।
वर्णितं समभवत्सकलं तत्
तत्प्रियेण जनकेन बुधेन ॥

: ३२ :

एवमद्भुतमवर्तत तस्याः
शिक्षणं स्वपितुरेव सकाशात् ।
यन्नदृष्टचरमत्र जगत्यां
नैव वा श्रुतचरं क्वचनाऽऽस्त ॥

: ३३ :

पुत्रिकां प्रति निरन्तरमेव
पत्रकाणि जनकः प्रजिघाय ।
साऽपि तानि सुकुमारवयस्का-
ऽधीत्य बोधमतुलं प्रतिपेदे ।।

: ३४ :

पत्रकैः स्खलनबाह्यविचित्रै-
र्ज्ञानसङ्क्रमविधिः प्रकटोऽभूत् ।
यं निरीक्ष्य सकला अपि लोका
विस्मयाम्बुधिमगाधमुपायुः ।।

(उपजातिवृत्तम्)

: ३५ :

शतं तथा षण्णवतिं पिताऽस्याः
सम्प्राहिणोद् ज्ञानविवृद्धिकामः ।
पत्राणि पुत्रीं प्रति यानि पश्चाद्
विश्वेतिहासाभिधया विरेजुः ।।

: ३६ :

एवं प्रवृत्तः किल बाल्यकाले
विलक्षणप्रातिभनेत्रवत्याः ।
अलौकिकार्थप्रतिभानवत्या
अस्याः सुविद्याधिगमः सुखेन ।।

(वसन्ततिलकावृत्तम्)

: १ :

बाल्यादजस्रमभवद् धृदि सङ्गतेन
फ़ीरोज़गान्ध्यभिधसुन्दरबालकेन ।
योऽस्या विलक्षणधियः प्रणयप्ररोहः
सोऽयं जगाम तरुणे वयसि प्रवृद्धिम् ॥

: २ :

वृद्धिं गते च सुतरां प्रणयप्ररोहे
तं बालमित्रमसकौ पतिमाचकाङ्क्ष ।
इच्छां निजां च जनकं निजगाद धीरा
स त्वाह तामिह विचारय पुत्रि ! भूयः ॥

: ३ :

कन्यापिताऽस्मि हितमित्यवधार्य वच्मि
कार्यं विचार्य करणीयमिह त्वयाऽत्र ।
सङ्कल्पमात्रवशगो न विनिर्णयोऽयं
पूर्वं परं च तनये ! प्रविचारयेह ॥

: ४ :

भेदोऽस्ति कश्चिदुभयोः प्रकृतौ च पृष्ठ-
भूमौ च हन्त ! युवयोरनुपेक्षणीयः ।
एवं विधेहि सुखिता भवितासि येन
नातः परं खलु भवेन्मम किञ्चिदिष्टम् ॥

: ५ :

तं पुत्र्युवाच मयका मनसा वृतोऽयं
स्वस्थो युवा च पतिरित्यवधारणीयम् ।
वृत्वा सकृच्च नहि तात ! कथञ्चिदेव
वृण्वीय कञ्चिदपरं पतिमित्यवेहि ॥

: ६ :

तस्या दृढां मतिमवेक्ष्य पिता स्वपुत्र्या-
श्छन्दस्तवास्तु तनये ! इति तामुवाच ।
नेच्छाविघातमहमाचरितास्मि ते, त्वं
प्राणैः प्रियाऽसि गुणवत्यसि मे तनूजे ! ॥

: ७ :

इत्यूचिवान् स सुधियामृषभोऽभिलष्यन्
सम्पादनं परिणयस्य शुभं सुतायाः ।
सम्बन्धिनां च सुहृदां च कृते विधिज्ञः
सम्प्रैरिरत् प्रमुदितश्च निमन्त्रणं द्राक् ॥

: ८ :

आसाद्य तत्सपदि सम्प्रतिपेदिवांसः
ते गेहमस्य शतशोऽथ सहस्रशश्च ।
तेषां भृतं तदचकात्सुविशालरूपं
पुष्पोत्करैः सुरुचिरैः परिशोभितं च ॥

: ९ :

अत्रान्तरे समुदभूदपवाद एको
यो वातचक्रमिव सम्प्रसृतो बभूव ।
जाता कुले सुविदिते भुवि नेहरूणां
कन्येन्दिरोद्वहति कञ्चन पारसीकम् ।।

: १० :

इत्येतदस्ति सुतरामविषह्यमेव
लोकस्य तावदिहदेशगतस्य हिन्दोः ।
नैकान् विहाय तरुणान् विदुषोऽत्र हिन्दून्
कन्येन्दिरा किमिति हिन्द्वितरे प्रसक्ता ।।

: ११ :

एतेन चेतसि भृशं परिपीडितः स्वं
रोद्धुं कथञ्चिदपि नालमसौ बभूव ।
क्षोभं स्वकं च शतशोऽथ सहस्रशश्च
पत्रैः स्वकैः सुविशदैः प्रकटीचकार ।।

: १२ :

पत्रैस्तु तैर्विचलिता न बभूव बाला
नो निश्चयं च विजहौ दृढबुद्धिरेषा ।
वाते महत्यपि महागिरयो भवेयु-
र्निष्कम्परूपरुचिरा इति नात्र चित्रम् ।।

: १३ :

संक्षेभमेव नहि केवलमत्र हिन्दू-
व्यंक्तं चकार विविधं व्यथितो जनोऽत्र ।
तस्याः प्रियस्य जनकस्य जवाहरस्या-
प्यन्यां मतिं परिणये दुहितुः स मेने ॥

: १४ :

नेमां प्रदातुमभिलष्यति पारसीक-
यूनेऽन्यधर्मगत इत्यभिलक्ष्य विद्वान् ।
विप्रः पिता स्वतनयामिति तत्र तस्य
स्वोपज्ञमेव खलु भाष्यमिदं बभूव ॥

: १५ :

नैतद्व्यचारयत हन्त ! विचारमूढो
धर्मान्ध एष परिवादपरो जनस्तु ।
पश्यन् कुटुम्बमिव सर्वजगत्स्वकीयं
सङ्कोचवृत्तिरसकौ न जवाहरः स्यात् ॥

: १६ :

एषोऽस्य धर्म इति जातिरथास्य वैषा
वर्णोऽस्य वाऽयमिति वाऽस्य च वेष एषः ।
एतादृशः खलु विचारसरण्य एव
प्रादुर्भवन्ति महतां नहि मानसेषु ॥

इन्दिराफ़ीरोज़गान्ध्योर्विवाहविधिः

भूदिग्ग्रहेन्दुमितवत्सर ईसवीये
मार्चाख्यमासि ऋतुराजविलोभनीये ।
फ़ीरोज़गान्ध्यभिधसुन्दरपारसीक-
यूनाऽभवत्परिणयः शुभ इन्दिरायाः ॥
१५.१६-२०. (ईषत्परिवर्त्य)

: १७ :

यूनोः प्रबुद्धतरयोः प्रकृतौ च पृष्ठ-
भूमौ च भेद इति नाम ज़वाहरस्य ।
आसीद्विवाहमभिलक्ष्य मनाग् विरोधो
धर्माग्रहो नहि बभूव तु तत्र हेतुः ॥

: १८ :

जातो यतः परिणयस्य महान् विरोधो
लोके, जवाहरमतोऽन्वशिषन्महात्मा ।
गान्धी, प्रयच्छ तनयां स्वयमेव योग्यां
गृह्णातु मित्र ! नहि येन जनोऽन्यमर्थम् ॥

: १९ :

ओमित्युवाच सरलप्रकृतिः स तं च
शास्त्रोक्तरीतिमनुसृत्य ददौ च कन्याम् ।
भूदिग्ग्रहेन्दुमितवत्सर ईसवीये
मार्चाख्यमासि ऋतुराजविलोभनीये ॥

: २० :

फ़ीरोज़गान्ध्यभिधसुन्दरपारसीक-
यूने विलक्षणधिये सुतरां प्रहृष्टः ।
वृत्ते शुभे परिणये च तयोः प्रमोद
आसीज्जनस्य च समस्य गृहागतस्य ॥

: २१ :

अस्याः शुभे परिणयावसरे सुगात्र्या
वेद्यां प्रक्लृप्तमनधिष्ठितमेकमास्त ।
मातुः कृते किल चिराय दिवं गताया
तातस्य पार्श्वमभिशोभयदासनाग्र्यम् ॥

: २२ :

रिक्तं मुहुर्मुहुरबोधयतेदमेव
दुःखं सुखं च सहगामि विधेर्बलेन ।
मोदोऽभवद्यदि महांस्तनयाविवाहे
पत्नीवियोग इति खेदभरोऽभवच्च ॥

: २३ :

लोकाधिनायकवरस्य जवाहरस्य
भावस्तथैव समभून्मनसीन्दिरायाः ।
प्रीतिः परा पतिसमागमनेन तस्या
आसीत् स्वमातुरनुपस्थितिजं च दुःखम् ॥

: २४ :

एवं परस्परविरोधिविचारवृन्दै-
रान्दोलिताऽतिसुकुमारवयाः कुमारी ।
सम्पत्स्यमानमचिराद्विरहं पितुः सा
सञ्चिन्त्य न क्षणमपि क्षणमाससाद ॥

: २५ :

हासप्रहासनिरते स्वसखीजनेऽपि
हर्षाप्लुते परिजने परितः स्थितेऽपि ।
आलक्ष्यताक्षियुगले भृशमायतेऽस्याः
सूक्ष्मा प्रहर्षसमयेऽपि विषादरेखा ॥

: २६ :

अम्बा यदाप्रभृति यातवती प्रियाऽस्याः
स्वर्गं तदाप्रभृति केवलमेषकैव ।
आलम्बनं स्वजनकस्य बभूव साऽपि
सम्प्रत्यहो ! पतिगृहं समुपैष्यतीति ॥

: २७ :

एकाकितासमनुचिन्तनबुद्धिरस्या-
स्तातस्य नैव कलयाऽपि चकार खेदम् ।
तामर्थ एव परकीय इति प्रपद्य
प्रादात्प्रसन्नमनसा स परिग्रहीत्रे ॥

: २८ :

आसीद्विवाहसमये परिधानमस्याः
कारागृहे स्वयमुतैस्तनुतन्तुजालैः ।
शाटी प्रियेण रचिता जनकेन शुभ्रा
हृत्तन्तुजालमिव सङ्ग्रथितं रसेन ॥

: २९ :

शाटीमिमां च परिधाय मनस्विनी सा
रक्तान्तकां प्रियतमे हृदयेन रक्ता ।
आरक्तवर्णकमनीयकपोलकान्तिः
कम्रा वधूरतितरां सुषमां प्रपेदे ॥

: ३० :

दत्ताङ्गरागरुचिरा स्वसखीभिरेषा
मुग्धा वृताऽतिकमनीयशरीरयष्टिः ।
नानाविधाभरणभूषितहृद्यरूपा
लज्जावनम्रवदनाऽतितरां चकाशे ॥

: ३१ :

(प्रहर्षिणीवृत्तम्)

बालैषा पतिमधिगम्य तेन सार्धं
कश्मीरान् मुदितमना जगाम तत्र ।
दृश्यानि प्रथिततमानि चापि दृष्ट्वा
तत्सङ्गादधिकतरां बभूव हृष्टा ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
पञ्चदशः सर्गः ॥

(प्रहर्षिणीवृत्तम्)

: १ :

कश्मीरेष्वतिकमनीयसौरभाढ्या
वासन्ती कुसुमसमृद्धिरद्वितीया ।
उद्भेदास्तरुषु हिमात्यये च हृद्या
दम्पत्योः प्रसभमहार्षुरन्तरङ्गम् ॥

: २ :

स्रोतोभिर्मुखरितदिक्तटैश्च रम्यैः
कूजद्भिर्विहगगणैश्च सम्प्रहृष्टैः ।
भूभागैर्नयनसुखैश्च शाद्वलैश्च
तौ सम्यग् विदधतुरात्मनो विनोदम् ॥

: ३ :

भ्राम्यन्तौ गिरितटिनीतटीषु तावद्
गच्छन्तावथ विपिनस्थलीषु तत्र ।
प्रस्नान्तावतिरमणीयनिर्झरेषु
स्वं कालं सुखिततरौ विनिन्यतुस्तौ ॥

: ४ :

अद्रीणां खलु हिमखण्डपाण्डराणि
शृङ्गाणि प्रतिदिशमक्षिलक्षितानि ।
नौपङ्क्तिर्गृहमिव सज्जिता स्रवन्त्यां
दम्पत्योर्मनसि मुदं परामकुर्वन् ॥

: ५ :

कुर्वन्तौ मधुरतराः प्रियाः कथास्तौ
विस्रब्धं खलु मधुयामिनीषु तुष्टौ ।
आनन्दं परममुपागतौ रसज्ञौ
स्वं कालं क्षणमिव निन्यतू रसेन ॥

: ६ :

तत्रस्थौ मृदुपरिहासकौतुकेन
सन्देशं चपलमती जवाहरं द्राक् ।
कस्मिंश्चिद्दिवस इमावहारयेतां
'सम्प्रेष्यः पवन इतोऽतिशीतलः किम्' ॥

: ७ :

तं लब्ध्वा परिगततन्मनोगतार्थः
स्मित्वेषत् स्वयमपि तद्वदेव विद्वान् ।
हासार्थं किमपि विचिन्त्य तौ प्रति द्राक्
सन्देशं रुचिरतरं स सन्दिदेश ॥

: ८ :

'वातः स्याच्छिशिरतरः प्रियश्च तत्र
नाम्राणां कथमपि वर्तते तु सत्ता ।'
सन्देशं निजगुरुतोऽधिगम्य रम्यं
संहृष्टाविति नवदम्पती अभूताम् ॥

: ९ :

एवं तौ परमरसाप्लुतौ युवानौ
कश्मीरेष्वधिगतसर्वसौख्यसारौ ।
सन्तृप्तौ प्रतिगमने मतिं व्यधत्तां
नो कश्चिच्चिरमभिरोचयेत् प्रवासम् ॥

: १० :

कश्मीरान् कथमपि सम्प्रहाय विज्ञौ
सम्प्राप्तौ पुरवरमात्मनः प्रयागम् ।
नैकैश्च प्रियतरकैः स्वबन्धुभिस्तौ
सङ्गत्य प्रियतरकाः कथा अकार्ष्टाम् ॥

: ११ :

फ़ीरोज़ः प्रयतपरिग्रहद्वितीयः
सोत्साहोऽभवदधुना सुशिक्षितश्च ।
तेनाभून्मनसि विचार एष तस्य
स्वां वृत्तिं किमिति न कल्पयेय साध्वीम् ॥

: १२ :

न स्वानामकृत समाश्रयं कथञ्चित्
नैवाथ श्वशुरसमाश्रयं गतोऽयम् ।
वृत्त्यर्थं स्वयमकृत प्रयत्नमेष
मानेच्छोर्भवति परावलम्बिता नो ॥

: १३ :

आगच्छत्सपदि सह स्वभार्ययाऽतः
प्रख्यातं पुरवरमेष लक्ष्मणाख्यम् ।
वृत्तिं चाप्यधिगतवान् प्रसिद्धनेश्नल्-
हेरल्डेत्यभिहितवृत्तपत्रवर्ये ॥

: १४ :

वेश्मायं रुचिरतरं च कल्पयित्वा
संवस्तुं सह निजभार्यया प्रवृत्तः ।
शक्रं तं सततमनुव्रता शचीव
तच्चित्ते परममसिक्त हर्षमेषा ॥

: १५ :

नूत्नं स्वं गृहमिदमिन्दिरा व्यधत्त
सज्जं स्वां रुचिमनुरुध्य वाञ्छनीयम् ।
स्वल्पं तद्रुचिरतया सुभूषितं सत्
सर्वेषां नयनयुगं जहार सद्यः ॥

: १६ :

कुर्वाणा सुखमिह गेहके निवासं
कालं स्वं मधुरतरं निनाय तन्वी ।
तां ज्ञात्वा कृतवसतिं तु तत्र योषाः
सन्द्रष्टुं प्रतिदिनमागमन्ननेकाः ॥

: १७ :

सायाह्ने पतिसुहृदश्च तत्प्रपन्नाः
सम्भाषां बहुविषयां प्रवर्तयन्तः ।
भूयांसं समयमिह स्थिता अभूव-
न्नत्यन्तं परिगतसाहसा युवानः ॥

: १८ :

सा ह्यासीन्मितवचना च संयता च
तद्भर्ता पुनरभवन्न संयतस्तु ।
भेदोऽयं रुचिवशगस्तयोः कदाचित्
तच्चित्तज्वरमपि कञ्चनाततान ॥

: १९ :

न त्वेवाभवदयमन्तरायभूत-
स्तत्प्रेम्णि प्रकटितभूम्नि लेशतोऽपि ।
कालोऽभूदतिगत एवमेव तत्र
दम्पत्योरभिरतयोः स्वकृत्यजाते ॥

: २० :

एतस्मिन्नभवदथान्तरे विशाल-
कांग्रेसाभिधसदसोऽधिवेशनस्य ।
मुम्बय्यां नयनसरित्पतिग्रहेन्दु-
सङ्ख्येऽब्दे बहुजनचर्चितः प्रघोषः ॥

: २१ :

तत्रेमावपि समुपस्थितिं लषन्तौ
सम्प्राप्तौ खलु समयेन विज्ञवर्यौ ।
नैकाभिर्ननु दृष्टिभिर्महत्त्वं
तस्यासीत्प्रथितसदोऽधिवेशनस्य ॥

: २२ :

तत्रैवाभवदधिघोषणाऽतिघोरा
यान्त्वस्या भरतभुवो विदेशजाताः ।
इत्येषा, समभवदहो ! ययोग्रकोपः
सर्वेषु प्रमुखजनेषु तत्र हन्त ! ॥

: २३ :

क्रूराणां भरतभुवः प्रशासितॄणां
येनासन् प्रमुखजना जवाहराद्याः ।
कारायां सपदि निपातिता नृशंसै-
र्वैदेश्यैर्भरतभुवोऽतिभारभूतैः ॥

: २४ :

तातं स्वं निगडितमाकलय्य खेदा-
दायासीत्पुरवरमेव सा प्रयागम् ।
तत्प्राप्ता सपदि गृहं पितुः प्रपन्ना
वैक्लव्यं परममुपागता श्रमार्ता ॥

: २५ :

(उपजातिवृत्तम्)

तत्राऽपि धार्योऽभवदार्तिभारस्
तन्व्यैनया स्वल्पवयस्कया च ।
स्वदेशकार्यार्थसमुत्सुकानां
मार्गाः सदा कण्टकिनो भवन्ति ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
षोडशः सर्गः ॥

(उपजातिवृत्तम्)

: १ :

तस्यां पितुर्गेहमुपेतवत्याम्
अन्येद्युरेवातिनृशंसकृत्यैः ।
पितृष्वसा बन्धनमापिताऽभू-
द्वैदेशिकैः शासितृभिः प्रसह्य ॥

: २ :

लक्ष्मीपरं सा विजयेति नाम
लक्ष्मीस्वरूपा कुशला बभार ।
तया वियोगो जनकेन चापि
तस्या भृशं दुःखमवाततान ॥

: ३ :

स्वं पर्यवस्थाप्य यथाकथञ्चित्
कालञ्च कञ्चिद् व्यतियाप्य तत्र ।
सा कोविदानां धुरि कीर्तनीया
स्वं लक्ष्मणाख्यं पुरमाससाद ॥

: ४ :

पतिस्तु तस्या निजिघृक्षितोऽपि
रक्षाजनैस्तद्वशमाप नैव ।
दिनानि नैकानि च तान्प्रवीणः
स वञ्चयामास यथाकथञ्चित् ॥

: ५ :

न तादृशोऽभूत्स जनाग्रगण्यो
य: स्वं स्वयं हन्त ! समर्पयेत ।
बलेन युक्त्या च भवेयुरेत-
द्द्विधा जना निग्रहभाजनानि ॥

: ६ :

पत्याऽपि तावद्रहिता मनस्वि-
न्यसाववात्सीन्निजनूत्नगेहे ।
एकाकिनी धैर्यधनाऽऽत्मनश्च
चिन्तामसौ नो कलयाऽपि चक्रे ॥

: ७ :

एवं स्थितायां किल तत्र तस्यां
ख्विग्क्रिश्चनाख्यस्य सुविश्रुतस्य ।
विद्यालयस्य स्वपुरस्थितस्य
च्छात्राः स्वयं तामुपसेदिवांसः ॥

: ८ :

तामूचिवांसश्च समे समेता
विद्यालयप्राङ्गण एव तावत् ।
राष्ट्रध्वजोच्छ्रायविधेः प्रियस्य
सम्पादने नोऽस्ति परोऽभिलाषः ॥

: ९ :

उपस्थिता स्याद्यदि तत्र कृत्ये
भवत्यपि प्राप्तयशा, भवेयुः ।
सिद्धिं गताः सर्वमनोरथा नो
बह्वी भवत्या महनीयताऽस्ति ॥

: १० :

आकर्ण्य सा तद्वचनं गभीर-
मोमित्युवाचातिकृशाङ्गयष्टिः ।
निर्दिष्टपूर्वेऽहनि सम्प्रहृष्टा
समागता तैः समये बभूव ॥

: ११ :

यावद् ध्वजोच्छ्रायमिहाततान
कश्चिद् विनेयो दृढसाहसेन ।
तावत् सुतीव्रा लगुडप्रहार-
वृष्टिः पपातोपरि तस्य बाह्वोः ॥

: १२ :

यावच्च भूयः प्रहृतः स शीर्ष्णा
स्वां भूमिमालिङ्गति वीरवर्यः ।
यावत्स्म हस्तात्पतति ध्वजोऽस्य
जग्राह तावद्व्रभसेन सा तम् ॥

: १३ :

उच्चैश्च चुक्रोश ध्वजो भविष्य-
त्ययं सदैवोर्ध्वगतिः प्रियो नः ।
तां नेहरूणां तनयां प्रवीरा-
मालक्ष्य राष्ट्रध्वजधारिणीं द्राक् ॥

: १४ :

विद्यार्थिनः स्फूर्तिमुपेयिवांस-
स्तत्र स्थिता आवृतवन्त एनाम् ।
दृष्ट्वा तु तान् रक्षिजना नृशंसा
अघ्नन् कठोरैर्लगुडप्रहारैः ॥

: १५ :

वर्षत्सु तावल्लगुडप्रहारे-
ष्वनारतं साहसमाश्रयन्ती ।
शिलेव साक्षात्सुदृढाऽवतस्थे
क्षणं न जात्वेव च सा चकम्पे ॥

: १६ :

एतादृशीं तां परिवीक्ष्य रक्षि-
जनाः परं क्रोधमुपेयिवांसः ।
क्रूरं प्रहारं करयोः प्रचक्रु-
र्येन ध्वजः पित्सुरलक्ष्यतास्याः ॥

: १७ :

क्षणं प्रजाता भृशविह्वलाऽपि
पीडां कथञ्चित् प्रविषह्य देवी ।
ध्वजं करान्नो विमुमोच तत्र
भूमिं गताऽप्यार्तिवशं गताऽपि ॥

: १८ :

एवं गतायामपि तत्र देव्यां
प्रहारवर्षो निपपात तस्याम् ।
निष्पिष्टगात्राऽपि पदत्रजातै-
र्ध्वजं प्रियं सा न मुमोच धीरा ॥

: १९ :

पितामही मेऽतिकृशाऽपि नैकान्
एवंविधान् सोढवती प्रहारान् ।
पितामहो मे जनकस्तथा च
बहून् प्रहारान् खलु सोढवन्तौ ॥

: २० :

जाता कुले सुप्रथिते हि तेषां
पीडां कथं नाहमहं सहेय ।
इत्येव सञ्चिन्त्य विदां वरेण्या
प्रहारपीडां परमां विषेहे ॥

: २१ :

प्रहृत्य रक्षिष्वथ तत्र घोरं
यथागतं तेषु गतेषु तावत् ।
क्लान्ता शरीरेण न चेतसाऽसौ
प्रत्याययौ वेश्म निजं प्रवीरा ॥

: २२ :

दिने व्यतीते निशि चागतायां
परैरदृष्टः पतिरभ्युपागात् ।
तस्या, अपृच्छच्च यदास्त वृत्तं
राष्ट्रध्वजोच्छ्रायविधौ प्रवृत्ते ॥

: २३ :

तद्वाचमाचम्य समभ्युवाच
स्वस्य स्वभावस्य वशं गताऽसौ ।
स्वल्पो विरोधोऽजनि रक्षिभिर्नो
राष्ट्रध्वजोच्छ्रायविधिस्तु वृत्तः ॥

: २४ :

आकर्ण्य तस्या गिरमेवमर्थ्यां
पतिः क्षतैर्ज्ञातसमस्ततत्त्वः ।
क्रुद्धः श्वसन् सर्प इव प्रकोपात्
यथागतं प्रत्यगमत् प्रवीरः ॥

: २५ :

(मालिनीवृत्तम्)

कियतिचिदपयाते काल एवं मनस्वि-
न्यकृत मनसि चिन्तां प्राप्ततातप्रवृत्तिः ।
कथमिव जनसङ्घं बोधयेयं हि तां द्राग्
भवतु मम पुरे तद्वृत्तमात्रेण तोषः ॥

॥ इति डा०सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
सप्तदशः सर्गः ॥

(उपजातिवृत्तम्)

: १ :

एवं विनिश्चित्य विदां वरेण्या
सैका सभां योजयितुं प्रयेते ।
निमन्त्रणानि प्रजिघाय चापि
वाचैव सा नैव दलैः कथञ्चित् ॥

: २ :

कारागृहान्मुक्तिमुपेयुषां सा
कांग्रेसिनां स्वल्पसदः प्रकल्प्य ।
स्वं निश्चयं प्रोच्य समभ्युवाच
तान्, आशु यूयं जनतामुपेत ॥

: ३ :

आख्यात चाथो निभृतं प्रवृत्ति
संयोज्यमानस्य सदोवरस्य ।
जनांश्च सम्प्रेरयतोपगन्तुं
तदेव सर्वे च तथा प्रचक्रुः ॥

: ४ :

स्थाने च निर्दिष्टचरे च काले
नैके जनास्तत्समुपेयिवांसः ।
सदो विशालं प्रियदर्शिनी च
प्रवक्तुमेतान् सपदि प्रवृत्ता ॥

: ५ :

सदःप्रवृत्तिं समवाप्य रक्षि-
जना अपि स्थानमुपेयुरेतत् ।
आभाषमाणां परमप्रवीरां
वीक्ष्येन्दिरां क्रोधवशं च जग्मुः ॥

: ६ :

तृणाय मत्वा खलु तान् भुजिष्यान्
सा वाग्मिनीनां धुरि कीर्तनीया ।
गिरं स्वकामर्थगुरुं गभीरां
प्रावर्तयत्तत्र विदां वरेण्या ॥

: ७ :

कालं तु तस्यां किल कञ्चिदेव
सम्प्रोक्तवत्यां शठ आंग्लदेश्यः ।
तामाह कश्चिद्विरमाशु योषे !
नातः परं वाक्प्रसरस्तवास्तु ॥

: ८ :

नो चेद् भुशुण्डीगुलिकाप्रहारः
प्राणान् प्रियांस्तेऽपहरेत्क्षणेन ।
यावद् गिरस्तस्य मुखाच्चरन्ति
क्रूरा इमा आंग्लभटस्य तस्य ॥

: ९ :

तावत्सभाया उदगात्तरस्वी
फ़ीरोज़गान्धी महता जवेन ।
विद्युद्गतिश्चैनमुपाद्रवत्स
तद्गात्रसम्मर्दनमाचिकीर्षुः ॥

: १० :

गर्वोन्नता तं च ददर्श पत्नी
प्रियेन्दिरा साहसिकं पतिं स्वम् ।
स चापि धैर्यस्य च साहसस्य
मूर्तिं प्रियां स्वां पुरतो ददर्श ॥

: ११ :

अन्योन्यसन्दर्शनमत्र चित्रं
तयोरनेकानि दिनानि तावत् ।
जातं क्षणेनैव वियुक्तयोस्तु
विधेर्विचित्राणि हि चेष्टितानि ॥

: १२ :

अत्रान्तरे सैनिक एक एताम्
आक्रम्य बाह्वोर्बलवच्चकर्ष ।
पार्श्वस्थमारोपयितुं स वाञ्छन्
स्ववाहनं बन्दिगृहं च नेतुम् ॥

: १३ :

लोकाः स्थितास्तत्र वितेनुरारात्
क्रुद्धाः कठोरं प्रतिरोधमस्य ।
तेनाऽऽस्त तस्याः प्रियदर्शनाया
अहो ! विचित्रा स्थितिरिन्दिरायाः ॥

: १४ :

एकत्र तावद् भट आचकर्ष
बाह्वोरिमामन्यभटैः समेतः ।
अन्यत्र तावज्जनताऽऽचकर्ष
तद्धस्ततो मोचयितुं प्रयत्ता ॥

: १५ :

एवं विकृष्टा प्रतिकूलदिक्षु
भटैश्च लोकैश्च मिथो विरुद्धैः ।
बभूव देवी क्षतविक्षताङ्गी
सा व्याकुला खण्डितवस्त्रका च ॥

: १६ :

एवं स्थिते शस्त्रिण आत्तकोपा
आपेतुरत्रान्यभटा नृशंसाः ।
आच्छिद्य तां च प्रसभं जनेभ्य
आरोपयंस्ते निजवाहनं द्राक् ॥

: १७ :

फ़ीरोज़गान्धि शतसङ्ख्यकांश्च
जनांस्तथाऽन्यान् निजदेशभक्तान् ।
आरोपयामासुरिमे प्रसह्य
स्ववाहनानि, त्वरितं च निन्युः ॥

: १८ :

प्रयागतीर्थं निकषा स्थिते हा !
कारागृहे नैन्यभिधानभाजि ।
स्त्रीपुंसयोर्भेदवशात्पृथक् च
फ़ीरोज़गान्धेश्च तथेन्दिरायाः ॥

: १९ :

जन्याश्च भर्तुश्च बभूव वासः
पृथक् पृथक्, तेन पृथक् स्थितौ तौ ।
अथेन्दिरा कक्षमुपेयुषी स्वं
पितृष्वसारं समवालुलोके ॥

: २० :

कक्षेऽस्मदीये समुपैति पुत्री
जवाहरस्येत्यधिगम्य वृत्तम् ।
बन्धे स्थिता याः किल जामयस्ता
दिदृक्षवस्तां बलवद् बभूवुः ॥

: २१ :

स्थित्वा तु मासान्नव तासु तन्वी
शरीरसादं परमं वहन्ती ।
कारागृहात्सा मुमुचेऽतिधीरा
वैदेशिकेनाऽपि हि शासनेन ।।

: २२ :

स्वास्थ्यं पुनर्लब्धवतीन्दिरेयं
कालेन भूयोऽपि कृशाङ्गयष्टिः ।
व्यापारयामास मनस्तनुं च
निरन्तरं मातृभुवो हिताय ।।

: २३ :

व्यापारणेनेत्थमथापि तस्याः
पितुः प्रयत्नैश्च महात्मनश्च ।
श्रीगान्धिनो यत्नशतैस्तथा चा-
न्येषां प्रयत्नैश्च सुधीवराणाम् ।।

: २४ :

सहस्रशश्चापि च लक्षशश्च
जाता जना भारतभूमिभागे ।
तस्याः स्वतन्त्रत्वविधानयज्ञे
स्वमाहुतिं कर्तुमहो ! प्रवृत्ताः ।।

: २५ :

प्रताड्यमाना लगुडैरजस्रं
भुशुण्डिकाग्रैश्च निहन्यमानाः ।
निष्पिष्यमाणाश्च पदत्रघातै-
राक्रुश्यमानाः परुषैश्च शब्दैः ॥

: २६ :

आकृष्यमाणा बलवच्च बन्दि-
गृहेषु घोरेष्वथ नीयमानाः ।
सम्प्राप्यमाणा बहुयातनाश्च
क्रूरा अहो ! रौरवनिर्विशेषाः ॥

: २७ :

देशस्वतन्त्रत्वपराः प्रवीरा
वन्दामहे मातरमित्युदीर्य ।
प्रदीप्तवक्त्राम्बुजदर्शनीया-
श्चयास्त्विषामित्यवधार्यमाणाः ॥

: २८ :

ते लक्षशश्चापि च कोटिशश्च
प्राणान् पणीकृत्य जयाय सज्जाः ।
भागीरथीवेग इवाविषह्या
वैदेशिकानां सुतरामभूवन् ॥

: २९ :

चिराय शक्या न हि तावदेते
संक्षोभिचित्ताः स्वमते स्थिताश्च ।
अस्माभिरप्यात्तसमस्तशस्त्रै-
र्वंशे हि संस्थापयितुं प्रवीराः ॥

: ३० :

स्फुलिङ्गपूगा इव दिक्षु कीर्णा
ज्वाला दवाग्नेः प्रसृता इवेद्धाः ।
एते समस्ता इति बुद्धिरद्धा
वैदेशिकानामिह सम्प्रवृत्ता ॥

: ३१ :

परं परं व्याजमुपेयुषी सा
बुद्धिर्न तान् प्रैरिरदत्र सम्यक् ।
प्रवर्तितुं, वक्रधियः कदाचि-
दृजुं न पन्थानमुपाश्रयेयुः ॥

: ३२ :

तथा प्रवृत्त्यं खलु तावदत्रा-
स्माभिर्यथैतेषु मिथो विवादः ।
आविर्भवेच्छाश्वतिकः क्षयार्थं
रोगः क्षयो नाम यथा प्रवृद्धः ॥

: ३३ :

(शार्दूलविक्रीडितवृत्तम्)

इत्येवं ते परमनिपुणाः सम्प्रधार्य स्वचित्ते
बीजोपक्षेपमादावतनिषत मिथो बुद्धिभेदस्य तावत् ।
पुण्यक्षेत्रे वसतिकृतिभृतां भारते नाम देशे
नीतेः पारं परमुपगता हन्त ! मौहम्मदानाम् ॥

॥ इति डा०सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
ऽष्टादशः सर्गः ॥

(उपजातिवृत्तम्)

: १ :

उप्तं तदेवं किल बुद्धिभेद-
बीजं गतं कालवशात्प्रवृद्धिम् ।
मौहम्मदा यद्वशमाप्रपद्य
विचारमूढत्वमुपेयिवांसः ।।

: २ :

मौहम्मदं धर्ममुपाश्रितानां
साम्यं न तावत् कलयाऽपि नोऽस्ति ।
हिन्द्वाख्यधर्माश्रयिभिः, पृथक्ता
सर्वात्मना नोऽस्ति ततः प्रसिद्धा ।।

: ३ :

राष्ट्रं पृथक् तावदतोऽस्तु तेषां
पृथक् पुनर्नस्तदिहास्तु चैव ।
इत्येवमासीन्मतमेतदीयं
परस्परस्यैव विनाशकारि ।।

: ४ :

प्रमाणभूतश्च मुहम्मदालि-
जिह्नेतिनामाऽभवदत्र कश्चित् ।
तेषां मतो नेतृवरोऽतिजिह्मो
विरोधबीजाङ्कुरणे सहायः ।।

: ५ :

यत्रास्तु सङ्ख्या महती जनानां
मौहम्मदानां खलु ते प्रदेशाः ।
पृथक् कृता मूलभुवो भवन्तु
नूत्नस्य राष्ट्रस्य निमित्तभूताः ॥

: ६ :

नामास्तु राष्ट्रस्य च तस्य पाकि-
स्थानेति नूत्नस्य नवीनमेव ।
मौहम्मदस्तत्र च धर्म एक
उत्कर्षकोटिं परमामुपैतु ॥

: ७ :

एतानि चान्यानि बहूनि चाऽऽख्यद्
वाक्यान्यसौ वाक्यविधौ प्रवीणः ।
वैदेशिकानां स्वमनोऽनुकूला-
नीत्यभ्युपायुः खलु तानि ते च ॥

: ८ :

तथा प्रवृत्ता निजशासनं ते
संहर्तुकामा अपि भारताद्धा ! ।
भागद्वयेन प्रविभाजनं स्यात्
तस्येति बुद्धिं कुटिलां प्रचक्रुः ॥

: ९ :

जवाहराद्यास्तु मनस्विवर्याः
स्वदेशभङ्गे विमनायमानाः ।
अप्यभ्युपायंस्तमुपायमेव
स्वाधीनतायाः कलयन्त आशु ॥

: १० :

आङ्ग्लास्त्वितो यान्तु, परे यतस्ते,
स्वेषां परेषां च मता हि नः स्वे ।
एकत्र भागे यदि शासनं स्यान्
मौहम्मदानामिति कात्र हानिः ? ॥

: ११ :

जाता इमे भारतभूमिभागे
तदन्नभोगेन समृद्धिमाप्ताः ।
बुद्धिभ्रमाद्यद्यपि तावदद्या-
स्मत्तः पृथक् स्वं कलयन्ति मूढाः ॥

: १२ :

तथाऽपि ते स्वे, न परे कथञ्चित्
प्रियाश्च मान्याश्च मता भृशं नः ।
बुद्धिभ्रमः कालकृतो ह्यमीषां
कालेन शान्तो भवितैव सत्यम् ॥

: १३ :

इत्येवमादि स्वमनःसु विज्ञाः
सञ्चिन्त्य भूयो बहुकालमेव ।
वैदेशिकैर्नीतिविदां वरेण्यै-
र्जिन्नादिकैरारचयंश्च वार्ताः ।।

: १४ :

ततस्तु तासां परिणाम एषो-
ऽजनिष्ट तावद् भृशमायतानाम् ।
द्विधाऽभवद् भारतभूमिरेषा
स्वाधीनतामध्यगमद् विभक्ता ।।

: १५ :

द्वीपाम्बुनिध्यङ्कशशाङ्कसङ्ख्ये
संवत्सरे मासवरे ह्यगस्त्ये ।
दिने शुभे पञ्चदशे स्वयं नः
समर्पितं शासनमाङ्गलीयैः ।।

: १६ :

तेन प्रिये भारतनाम्नि देशे
हर्षप्रकर्षस्य बभूव वर्षः ।
चिरप्रवृत्तः कठिनोऽत्र देशे
स्वातन्त्र्ययत्नो विरतिं गतश्च ।।

: १७ :

दिने स्वतन्त्रत्वमवाप तस्मि-
न्नेवाथ नूत्नो रचितो विदेश्यैः ।
मौहम्मदानां कथनात्तु पाकि-
स्थानाभिधानोऽपि च हन्त ! देशः ।।

: १८ :

येषु प्रदेशेष्वभवद् बहुत्वं
मौहम्मदानां खलु तान् समस्तान् ।
आदाय चादाय च कल्पितोऽभूच्
चित्राकृतिर्देशविशेष एषः ।।

: १९ :

अतोऽभवद् दुर्घटताऽत्र, क्लृप्तो
नैवायमासीत्सुघटत्वदृष्ट्या ।
एकश्च खण्डोऽभवदस्य पूर्व-
दिश्यन्य एवास्त च पश्चिमायाम् ।।

: २० :

द्विधा कृतात्पञ्चनदप्रदेशाद्
वङ्गप्रदेशाच्च कृतात्तथैव ।
एकैकमादाय तु खण्डमेष
देशो विचित्रो रचितो बभूव ।।

: २१ :

सिन्धुप्रदेशश्च तथा च बिल्लोच्-
स्थानं च सीमान्त इति श्रुतश्च ।
प्रदेशवर्या हि बभूवुरस्मिन्
देशेऽङ्गभूता नवतां दधाने ॥

: २२ :

स्वातन्त्र्यमाप्तस्य हि भारतस्य
जवाहरोऽभूद्विदुषां वरेण्यः ।
प्रधानमन्त्री, विदितो जनाना-
मादर्शभूतो भुवि सज्जनानाम् ॥

: २३ :

मौहम्मदानामयमस्ति पाकि-
स्थानाभिधानः खलु रम्यदेशः ।
अन्ये तु ये सन्तु जना इहाशु
गच्छन्तु ते भारतदेशमेव ॥

: २४ :

विधर्मिणां स्थानमिहास्ति नैव
तद्रिक्त एवास्त्वयमद्य देशः ।
दुर्बुद्धिमेतां परिगृह्य ते त-
न्निःसारणं सम्यगभावयन्त ॥

: २५ :

(वैतालीयवृत्तम्)

अथ बुद्धेर्विपरीततावशाद्
बहुकालप्रतिवेशिनोऽपि हा ! ।
निजदेशे परतामुपागता
अतिचित्रं ननु धातृचेष्टितम् ।।

।। इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
एकोनविंशः सर्गः ।।

[वैतालीय (सुन्दरी) वृत्तम्]

: १ :

अथ हिन्दुजनान् प्रति क्रुधं
परमां बिभ्रत आततायिनः ।
पशुमारमिमानमारयन्
धनमेषामहरन्पशूंस्तथा ॥

: २ :

अनलं निलयेषु चाददु-
र्युवतीश्चापि वृथाऽहरन् क्रुधा ।
अपरं च मुहम्मदानुगा
अतिघोरं भुवि कर्म चक्रिरे ॥

: ३ :

न दयाऽभवदाततायिनां
करुणा नैव मनःस्ववातरत् ।
अभवत्परधर्मिणां मुधा
ननु हिंसैव विनोदसाधनम् ॥

: ४ :

अथ तत्कृतवैशसान्निजां
तनुरक्षां परितश्चिकीर्षवः ।
द्रुतमेव ततोऽपदुद्रुवु-
र्बहवो हिन्दुजना भयातुराः ॥

: ५ :

शतशोऽथ सहस्रशश्च ते
　निजभूमेः प्रसभं बहिष्कृताः ।
　　व्यथिताः सुतरामकिञ्चनाः
　　　शरणं भारतमाप्रपेदिरे ॥

: ६ :

प्रचुरा खलु तत्सहायता
　प्रथमं कृत्यमिति प्रजानती ।
　　पतिगेहत इन्दिराऽगम-
　　　त्पितुरेवालयमन्यसेविका ॥

: ७ :

अभिवीक्ष्य मुहम्मदानुगान्
　निजदेशे परहिंसने रतान् ।
　　ननु हिन्दुजना अपि क्रुधा
　　　बहु कर्मातिविगर्हितं व्यधुः ॥

: ८ :

अददुस्तेऽप्यनलं मुहम्मदा-
　नुगतानां निलयेष्वनेकशः ।
　　विनिजघ्नुरनागसो जनान्
　　　परधर्मानुगता इति क्रुधा ॥

: ९ :

इतरेतरपीडने रताः
समभूवन्नुभयेऽपि मन्युना ।
प्रबलेन वशीकृता अहो !
यवना हिन्दुजनाश्च भारते ॥

: १० :

निखिलेयमभून्मही भृशं
जनहिंसाकुलिता प्रपीडिता ।
सुजना इह संहृतिं ध्रुवं
प्रविलोक्याकुलतां परां ययुः ॥

: ११ :

मतिमानपि मानवस्तदा
न विवेके मतिमादधादिति ।
भृशमन्वभवत्स यातना
'अविवेकः परमापदां पदम्' ॥

: १२ :

इति तेन कदर्थितं मनो
मृदुचित्तस्य जवाहरस्य हा ! ।
अभवद् गुरु कर्म चैकतो-
ऽपरतोऽभूच्च मनोव्यथा भृशा ॥

: १३ :

कथमेवमयं चिरं मम
　निजकृत्यं गुरु निर्वहेद् गुरुः ।
　　इति चिन्तनसक्तमानसा
　　　ऽऽत्मनि कृत्यं बहु साऽऽदधौ स्वयम् ॥

: १४ :

पितुरेव तदाप्रभृत्यभूत्
　परिचर्या प्रथमं तदीप्सितम् ।
　　निजदेशहिते रतं सदा
　　　गृहचिन्तारहितं व्यधादसौ ॥

: १५ :

बहुधा वेश्म तदीयमाययुः
　परराष्ट्राधिकृता जनाः प्रियम् ।
　　विदधे मनसा सभाजना-
　　　मियमेषां मधुरां मनस्विनी ॥

: १६ :

बहुधा शरणार्थिनोऽपि तद्
　गृहमापुः किल तत्कृते बुधा ।
　　इयमातनुत स्वयं श्रमा-
　　　दुचितं भोजनसंविधानकम् ॥

: १७ :

विपुले पितुरेव वेश्मनि
सुविशालः पटवासकोऽभवत् ।
यमिमे शरणार्थिनो जना
शरणायानुदिनं प्रपेदिरे ॥

: १८ :

अतिदुःखमिमे स्वचेतसि
दधतो दैववशादकिञ्चनाः ।
शरणं तु जवाहरोऽधुने-
ति गृहं तस्य समाययुर्द्रुतम् ॥

: १९ :

गुरुकार्यरतो जवाहरः
कथमेषां सुखसंविधानकम् ।
विदधात्विति तत्सुतैव तद्
व्यदधात्सर्वमनारतं बुधा ॥

: २० :

न हि सा क्षणमप्यकर्मकृत्
समवातिष्ठत कोविदाग्रगा ।
पितृवद् बहुकर्मसंरता
श्रममेवातनुत प्रियंवदा ॥

: २१ :

समयं बहुमास्त तत्कृतं
　पितृगेहाखिलसंविधानकम् ।
　　पितृसेवनमेव चेत्यहो !
　　　ननु कर्मद्वयकं मनोरमम् ।।

: २२ :

नहि सा स्वकृते तु किञ्चन
　चकमे तातसुखे रताऽनिशम् ।
　　सुतरां तमनुव्रता बुधा
　　　ननु छायेव तमन्वगात् सदा ।।

: २३ :

सह तेन ययावियं सदा
　सुखमस्यादधती स्वचेतसि ।
　　परदेशमयान्निमन्त्रितो
　　　यदि विद्वत्प्रवरो जवाहरः ।।

: २४ :

इयमास्त विशेषचर्चने
　परराष्ट्राधिकृतैस्तथाऽपरैः ।
　　जननेतृवरैर्विदां वरा
　　　स्वपितुः सन्निधिमास्थिता ध्रुवम् ।।

: २५ :

अश्रृणोत्समुदीरिता गिरो-
ऽवहिता मौनमवास्थितैषका ।
पितृपार्श्वगता तथाऽभव-
न्न यथाऽवेत्तदुपस्थितिं जनः ।।

: २६ :

अथ केवलमेकदैव सा
सुहृदां प्रेरणमभ्युपेयुषी ।
पदमुच्चतरं मनस्विनी
पितुराज्ञावशगाऽभ्युपागमत् ।।

: २७ :

अपवाद इवाभवद् ध्रुव-
मयमस्या दृढनिश्चयस्य तु ।
हितमित्यवधार्य साऽभ्युपै-
दिदमित्यत्र न कोऽपि संशयः ।।

(अनुष्टुब्वृत्तम्)

: २८ :

पितुः प्रधानमन्त्रित्वकालेऽनिच्छन्त्यपि स्वयम् ।
कांग्रेसनाम्नः सदसोऽध्यक्षत्वं प्रत्यपद्यत ।।

: २९ :

वर्षद्वयं प्रयत्नेन तस्य निर्वाहमाचरत् ।
तथा साधु यथा सर्वो लोको विस्मयमाययौ ।।

।। इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
विंशः सर्गः ।।

(अनुष्टुब्वृत्तम्)

: १ :

ततश्च पुनरेवासौ पितृसेवापराऽभवत् ।
न च कालं बहुं तस्याः पिताऽजीवत्ततः परम् ॥

: २ :

कार्यातिरेकविक्लान्तो वार्धक्यं समुपेयिवान् ।
मित्रभावमिवापन्नैर्विषकुम्भैः पयोमुखैः ॥

: ३ :

आक्रान्तभारतैश्चीनैः सुतराञ्च प्रवञ्चितः ।
जराजर्जरगात्रश्च गोलोकं प्रत्यपद्यत ॥

: ४ :

तादृशे तु महावृक्षे कालेन विनिपातिते ।
हाहाकारो प्रवृत्तोऽभूद्दिक्षु चापि विदिक्षु च ॥

: ५ :

तुल्यं वज्रप्रहारेण घोरं नियतिचेष्टितम् ।
अश्रुपूर्णमुखा लोकाः कथञ्चिदिव सेहिरे ॥

: ६ :

न हि प्रधानमन्त्र्यासीत्केवलं स महाजनः ।
पूजनीयश्च वन्द्यश्च प्रियश्चापि बभूव सः ॥

: ७ :

तादृशेन महापुंसा कदाचिद्विरहो भवेत् ।
इत्येव स्नेहसंसिक्तो नैव कश्चिदतर्कयत् ॥

: ८ :

'अधृष्यश्चाभिगंम्यः' स भीमकान्तैर्गुणैरभूत् ।
'आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः' ॥

: ९ :

अप्रधृष्यस्य तस्यापि कालः प्राणानपाहरत् ।
सत्यमेवोच्यते प्राज्ञै'र्मृत्युर्वै प्राणिनां ध्रुवः' ॥

: १० :

ताते प्रिये दिवं याते वैक्लव्यं परमं गता ।
अपीन्दिरा न तत्याज धैर्यं धैर्यस्वरूपधृत् ॥

: ११ :

आबाल्यात्तातसङ्गे सा स्थिता तेन च लालिता ।
तद्वियोगे जगत्सर्वं तस्याः शून्यमिवाभवत् ॥

: १२ :

तथापि चेतसो भावान् संन्ययच्छन्मनस्विनी ।
असामान्यचरित्रा नो चेष्टेरन् प्राकृता इव ॥

: १३ :

मनस्विनी क्रियाः सर्वाः सा चकारौर्ध्वदेहिकीः ।
एवं समाचरन्ती च पुत्रकृत्यमवर्तयत् ॥

: १४ :

जवाहरे दिवं याते तस्य विश्वासभाजनम् ।
सौम्यः श्लक्ष्णस्वभावश्च शास्त्री लालबहादुरः ॥

: १५ :

कामराजादिकांग्रेसाधिकृतानां प्रयत्नतः ।
प्रधानमन्त्रितां यातो देशस्यास्य विचक्षणः ॥

: १६ :

अष्टादशैव मासान् स पदमेतदभूषयत् ।
ततः परं प्रभुः कालः प्राणांस्तस्याप्यपाहरत् ॥

: १७ :

तस्याधिकारकालेऽभूदिन्दिरा सूचनार्थके ।
प्रसारणार्थके चापि मन्त्रालयवरे शुभा ॥

: १८ :

मन्त्रिणी, मन्त्रणा एषा नैकास्तथाविधा अदात् ।
येन कार्यं तदायत्तं सर्वं सम्पत्तिमाययौ ॥

: १९ :

गते द्युलोकं लोकस्य प्रिये लालबहादुरे ।
शास्त्रीत्यभिधया ख्याते लोकेनैषा वृताऽभवत् ॥

: २० :

स्पृह्ये प्रधानमन्त्रित्वे, प्रधानं सा गुणैरभूत् ।
गुणैः प्रधानभावोऽस्याः प्रतूर्णं व्यक्ततां गतः ॥

: २१ :

मोरार्जीनामधेयोऽस्या विपक्षपथमाश्रितः ।
कांग्रेससदसः सोऽयं नेतृष्वन्यतमोऽभवत् ॥

: २२ :

स प्रधानमन्त्रिपदं स्वस्यार्थे चकमे यतः ।
ततोऽजायत सङ्घर्षोऽनया तत्प्राप्तिहेतुकः ॥

: २३ :

तत्रापद्विजयं देवी सूक्ष्मदृष्टिविभूषिता ।
यथामति यथाशक्ति शासनं साधु साऽऽचरत् ॥

: २४ :

शासनं प्रवितन्वत्याः कालः कश्चिद्ययौ ततः ।
प्रश्न एको दुराख्यानो विषमः समुपस्थितः ॥

: २५ :

ज़ाकिर्हुसैननामाऽभूद्देशे राष्ट्रपतिस्तदा ।
अकस्मादेव तं मृत्युर्बलादाक्रान्तवान् बुधम् ।।

: २६ :

अकालमृत्युं तस्मिंश्च समुपेयुषि को भवेत् ।
देशे राष्ट्रपती रम्ये प्रश्नोऽभूदेष उत्थितः ।।

: २७ :

कांग्रेससदसो नेतृवराः सञ्चिन्त्य तत्कृते ।
सञ्जीवरेड्डीत्याख्यस्य प्रास्तुवन्नाम कस्यचित् ।।

: २८ :

गिरिरित्यभिधानोऽभूत्तदा देशे विदां वरः ।
उपराष्ट्रपतिः कश्चित्सोऽप्येतच्चकमे पदम् ।।

: २९ :

उपराष्ट्रपतिर्यः स्यात्स्यात्स राष्ट्रपतिः किल ।
एतदेव पुरावृत्तमेषैवास्मत्परम्परा ।।

: ३० :

इत्याचष्ट बुधः सोऽयं प्रेप्सू राष्ट्रपतेः पदम् ।
न च कांग्रेसनेतारस्तद्वचोऽमानयंस्तदा ।।

: ३१ :

एवं निराकृतस्तैस्तु कांग्रेसं विजहावयम् ।
स्वतन्त्रोऽपरवांश्चैव सङ्घर्षायोदयुज्यत ॥

: ३२ :

तस्मिन्काले मतं तेषां नेन्दिराऽप्यभ्युपागमत् ।
गिरेः समर्थनं बाढं तद्विरोधेऽपि साऽऽचरत् ॥

: ३३ :

तेन क्रुद्धा भृशं ते तु पदा स्पृष्टा इवोरगाः ।
तथाऽचेष्टन्त येनाऽस्या विरोधस्तैरभूद् दृढः ॥

: ३४ :

अदीर्घदर्शिनो वृद्धा लोभमात्सर्यदूषिताः ।
धनिनां वशगाश्चैते सदा स्वार्थपरायणाः ॥

: ३५ :

न नेतृत्वाय कांग्रेसनाम्नः श्रेष्ठस्य कर्हिचित् ।
कल्पन्ते सदसस्तावदित्यभूदिन्दिरामतिः ॥

: ३६ :

बहु नाम हि कर्तव्यमस्मद्देशेऽवशिष्यते ।
अकालहीनं तत्कार्यमस्माभिः सुपरीक्षितम् ॥

: ३७ :

कोटिशोऽत्र जना देशे दारिद्र्यवशमागताः ।
दिनस्य द्विरपि प्रायो भोक्तुं नैवाप्नुवन्त्यहो ! ॥

: ३८ :

दरिद्राऽशिक्षिता चापि व्याधिभिश्चापि पीडिता ।
अन्धविश्वासपूर्णा च प्रजाऽत्रत्या विलोक्यते ॥

: ३९ :

अस्या उद्धार एतादृक्छीलैः स्वार्थपरायणैः ।
वर्षीयोभिर्विधातुं नो पार्येत हि कदाचन ॥

: ४० :

इति सञ्चिन्त्य सञ्चिन्त्य निरचैषीदियं बुधा ।
नूत्नकांग्रेससंस्थाया घटनं, द्राग् व्यधाच्च तत् ॥

: ४१ :

सहस्रशो जनाश्चैनां स्वेच्छयैवान्वयासिषुः ।
साधुपक्षे स्थितामेतां मन्यमाना विचक्षणाम् ॥

: ४२ :

एवमास्तां तदा संस्थे द्वे कांग्रेसाभिधानके ।
पुरातनी च नूत्ना च तत्र नूत्ना व्यशिष्यत ॥

: ४३ :

भूयांसस्तरुणाश्चान्ये स्वदेशहितकाम्यया ।
त्यक्त्वा प्रत्नं सदो नूत्नं स्वेच्छयैव समाश्रिताः ॥

: ४४ :

तेन सङ्ख्या विशिष्टाऽभून्नूत्नस्यैवेत्यसंशयम् ।
सोत्साहैः स्फूर्तिमद्भिश्च जनैस्तत्सङ्गतं बभौ ॥

: ४५ :

(उपजातिवृत्तम्)

निजां च शक्तिं मतिवैभवं तथा
समस्तमेवेदमयोजयद्गिरेः ।
जयाय, सोऽप्येतमवाप्य तस्या
अयं जयोऽभूदिति मन्यते स्म ॥

: ४६ :

(मालिनीवृत्तम्)

अथ नवमवकल्प्य स्वीयकांग्रेससङ्घं
भुवि सकलजनेषु प्राप्तभव्यप्रतिष्ठा ।
जनगणमनसां सा मार्गसन्दर्शयित्री
निजगुणगणशोभाचारुशीला चकाशे ॥

॥ इति डा०सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
एकविंशः सर्गः ॥

(वंशस्थवृत्तम्)

: १ :

न केवलं विश्ववरेन्दिरा पुरा
प्रथां गताऽऽदर्शसुतेति भारते ।
मनस्यनन्तां ममतां वहन्त्यसा-
वकीर्त्यतादर्शजनन्यपि ध्रुवम् ॥

: २ :

शिशून् प्रति प्रेम निसर्गजं बभा-
वगाधमस्या इति नात्र संशयः ।
कुमारिकापीयमवर्षदेष्विवा-
नुरागवर्षं जलदालिरद्भुतम् ॥

: ३ :

स्त्रियाः कृतार्थत्वमिदं, लभेत सा
मनोरमं मातृपदं शुभं यदि ।
अपत्यहीना विफलाऽन्यथा त्वियं
स्वजीवितं संक्षपयेदनर्थकम् ॥

: ४ :

इतीयमस्या मनसो विचारणा
दृढा पुराऽलक्ष्यत शिक्षकैरपि ।
प्रिया अमुष्याः शिशवोऽभवन् भृशं
प्रिया च तेषामियमप्यभूत्तथा ॥

: ५ :

अपत्यमेषाऽभिचकाङ्क्ष सुन्दरं
स्पृहार्हंमातृत्वपदं च कोविदा ।
विना तु मातृत्वमपूर्णमेव सा
ऽतिनिष्फलं जीवितमित्यमन्यत ॥

: ६ :

शिशुप्रिया नेत्ररसायनं ततः
शिशुं शुभं साऽजनयद् गुणाकरम् ।
समुद्रवार्ध्यङ्कशशाङ्कसंमिते
सुमङ्गले हायन इष्टमङ्गला ॥

: ७ :

शिशुः क्रमेणैष दिने दिने शुभः
कलेव चन्द्रस्य विवृद्धिमागतः ।
मुदां भरं सञ्जनयन् प्रियोऽभवत्
पितुश्च मातुश्च विलक्षणाकृतिः ॥

: ८ :

पितामही नाम बभार यत्प्रिय-
मधीयतास्मै शिशवे तदेव तु ।
बभार राजीवमिति प्रथामियं
यतोऽभवत्सैव शिशोः प्रथा ततः ॥

: ९ :

(उपजातिवृत्तम्)

बभूव नामद्वयमिन्दिराया
मातुः प्रियायाः कमलेति चैकम् ।
राजीवमित्यन्यदथो, तयोस्तु
लोके प्रसिद्धिं प्रथमं जगाम ।।

: १० :

(वंशस्थवृत्तम्)

गते तु वर्षद्वय इन्दिरेतरं
शिशुं शुभा साऽजनयच्छुभाकृतिम् ।
उदीरितः सञ्जय इत्ययं जयं
गुणैर्भविष्यन्तमसूचयद् गुणी ।।

: ११ :

सुतावुभौ नेत्रसुखाकरौ प्रिया-
ववाप्य वात्सल्यमयीन्दिरा सुधीः ।
अमन्यत स्वस्य कृतार्थतां परां
मुदां च कोटिं परमां श्रिताऽभवत् ।।

: १२ :

तथैव तातोऽपि तयोरमन्यत
सुपुत्रवक्त्राम्बुजदर्शनोत्सुकः ।
उभौ सुखेनैवमहो ! विनिन्यतुः
पिता च माता च निजान्यहानि तौ ।।

: १३ :

गुरावियं कृत्यभरेऽपि संरता
न तौ विसस्मार सुतौ कथञ्चन ।
अवश्यमेव व्यनयच्च कञ्चन
समं हि ताभ्यां समयं सुधीवरा ॥

: १४ :

व्यधात्समं क्रीडनमिन्दिरा सुधी-
रभुङ्क्त ताभ्यां सममेव चान्वहम् ।
स्वयं च तद्धर्षविषादसङ्गता
स्वमातृकृत्यं निरवोढ वत्सला ॥

: १५ :

पिताऽपि तद्वत्सुतदर्शनेच्छुकः
पृथक् स्थितिं स्वां कलयन्नपि ध्रुवम् ।
अजस्रमेव श्वशुरस्य गेहकम्
उपागतोऽभूदुपदासमन्वितः ॥

: १६ :

यदाऽवसल्लक्ष्मणनामके पुरे
तदा स तस्माद् बहुशः समागमत् ।
यदा पुनर्दिल्लिपुरेऽवसत् सुधीः
पृथक् स्वकाद्वेश्मन एष आययौ ॥

राजीवसञ्जयसङ्गता मातेन्दिरा

गुराविय कृत्यभरेऽपि संरता
न तौ विसस्मार सुतौ कथञ्चन ।
अवश्यमेव व्यनयच्च कञ्चन
समं हि ताभ्यां समयं सुधीवरा ॥
२२.१३.

: १७ :

न तत्प्रियोऽभूच्छ्वशुरस्य वेश्मनि
निवास इत्यर्थमसौ पृथङ् निजम् ।
निवासमातेन उभौ सुतौ पुन-
र्दिदृक्षुरागाच्छ्वशुरालयं मुहुः ॥

: १८ :

सुताविमौ 'यौवनभिन्नशैशवौ'
क्रमेण जातौ दृढगात्रबन्धुरौ ।
स्वयं वृते शिक्षितकन्यके प्रिये
अकामयेतां परिणेतुमुत्तमे ॥

: १९ :

तयोरिमं काममियं बुधोत्तमा
न दीर्घदृष्टिः कथमप्यपाकरोत् ।
वृते उभाभ्यां यदि कन्यकोत्तमे
कथं न तौ ते परिणेतुमर्हतः ? ॥

: २० :

इमां शुभा सा दधती मतिं शुभां
तयोर्विवाहं मनसाऽन्वमन्यत ।
इतालिदेश्येयमियं विधर्मिणी-
ति चिन्तने नैव मनोऽददात्तथा ॥

: २१ :

तयोर्विवाहेऽम्बिकयोररीकृते
सुतस्तु राजीव इति प्रकीर्तितः ।
इतालिदेश्यां किल सोनियाभिधां
कुमारिकां पर्यणयत्सुशोभनाम् ॥

(उपजातिवृत्तम्)

: २२ :

तथैव तस्यावरजः कुमारो
लोके गतः सञ्जय इत्यभिख्याम् ।
स मेनकां शिष्यकुलावतंसं
कुमारिकां पर्यणयत् सुगात्रीम् ॥

: २३ :

वधूद्वयाप्त्या सुतरां प्रसन्ना
सुतोत्तमाभ्यां परिषेविता च ।
चित्तेन वात्सल्यरसाप्लुतेन
मातेन्दिरा स्वं समयं निनाय ॥

: २४ :

ज्येष्ठस्य कालेन सुतस्य तस्या
राजीवनाम्ना भुवि विश्रुतस्य ।
अजायतापत्ययुगं मनोज्ञं
पितामहीहर्षविवृद्धिकारि ॥

: २५ :

एकः सुतोऽपत्ययुगेऽस्ति तत्र
बिभर्ति यो राहुल इत्यभिख्याम् ।
एका सुता चास्ति कनीयसी या
संज्ञां प्रियङ्केति बिभर्ति हृद्याम् ॥

: २६ :

प्रधानमन्त्रित्वधुरां वहन्ती
देशस्य सा भारतनामकस्य ।
निरन्तरं कृत्यभरेऽपि रक्ता
मातेन्दिरा प्राप्तयशाः पृथिव्याम् ॥

: २७ :

स्वपौत्रकौ लालयति प्रकामं
शिशुप्रियत्वं च निजं व्यनक्ति ।
स्वल्पेऽपि लब्धेऽवसरे च विज्ञा
सङ्क्रीडते स्नेहरसेन ताभ्याम् ॥

: २८ :

विश्रामकामा श्रमकर्शितेयं
यं यं हि देशं समुपैति धीरा ।
प्रियं कुटुम्बं खलु तत्र तत्र
मनोविनोदाय करोति सत्रा ॥

: २९ :

न केवलं साऽस्ति सुशासिकैव
नेत्री तु वा सर्वजनस्य विज्ञा ।
माताऽपि वात्सल्यरसेन सिक्ता
साऽस्तीति मातृत्वगुणा जयन्ति ॥

: ३० :

नादर्शमातैव विभाति भूमा-
वादर्शपत्नीयमपीति सत्यम् ।
यद्यप्यवर्तिष्ट चिराय सङ्ग-
स्तस्या न भर्त्रा विधिवैपरीत्यात् ॥

: ३१ :

देशस्य कार्ये सुतरां प्रसक्तः
पितेति सा सङ्गतिभाग्बभूव ।
तस्यैव, कालं बहुमात्तभारा
नो चेदुपेक्षावशतः स सीदेत् ॥

: ३२ :

एकाकिता तस्य नःप्रसादं
हरेत्तथा संक्षपयेच्च शक्तिम् ।
इत्येव सञ्चिन्त्य विहाय पत्युः
सङ्गं पितुर्गेहमुपागताऽभूत् ॥

: ३३ :

त्यागं महान्तं विदधे विपश्चिद्
देशार्थमेषेति विभावनीयम् ।
देशस्य कार्येऽभिरतः पिताऽस्याः
सुखं भवेत्तस्य हि देशकार्यम् ॥

: ३४ :

स्थितिं पृथक् स्वां कलयन्त्यपीयं
स्वस्मात्पतिं नैव पृथक् चकार ।
चित्ते तदीये समुवास सोऽस्या
निरन्तरं प्रेमरसानुविद्धः ॥

: ३५ :

पूर्वं पुरेऽसौ समुवास विज्ञो
सुविश्रुते लक्ष्मणनामधेये ।
कार्यं प्रकुर्वन् बहु तत्र नेश्नल्
हेरल्डसंज्ञे खलु वृत्तपत्रे ॥

: ३६ :

ततोऽन्वसौ लोकसभासदस्य-
त्वेनाभवद् वाग्मिवरो जनेन ।
निर्वाचितो दिल्लिपुरीमुपेतः
सदस्यवासाय सुकल्पितानाम् ॥

: ३७ :

एकं गृहाणां परिगृह्य धीरः
स्वात्मार्थमावासमकल्पयत्तत् ।
मनस्विता तं न्यरुणन्निवासाद्
दिल्लीपुरस्थे श्वशुरस्य गेहे ।।

: ३८ :

द्रष्टुं स्वभार्यां तनयौ च धीमान्
यदा कदोपैच्छ्वशुरस्य गेहम् ।
कालं तु भूयांसमसावनैषी-
देकान्तवासेन सुदुःखितात्मा ।।

: ३९ :

प्रादुर्बभूवास्य शरीरसादो
मनोऽवसादेन भवेद् ध्रुवं सः ।
शरीरसादेन सहैव चापि
हृद्रोग आस्कन्ददिमं बलेन ।।

: ४० :

तद् वृत्तमाकर्ण्य भृशं विषण्णा
पितुर्गृहात्तं समुपेयुषी द्राक् ।
रोगोपचारार्थकृतप्रयत्ना
देवीन्दिरा व्याकुलतामवाप ।।

: ४१ :

भिषग्वरेण्यैर्विहितोपचारः
स्वास्थ्यं यदाऽसौ कलयाऽध्यगच्छत् ।
तत्प्रेमपाकाहृतमानसा तं
कश्मीरदेशं प्रति सा निनाय ।।

: ४२ :

सङ्गेन तस्या रमणीयदृश्यैः
शीतैस्तथा हृद्यतरैश्च वातैः ।
आरोग्यमासाद्य सुधीवरेण्यः
तया समं संन्यवृतत्स दिल्लीम् ।।

: ४३ :

कालेन वासात्पृथगेव पत्न्याः
पुनः स हृद्रोगवशं गतोऽभूत् ।
न चाधुनाऽभूत् प्रबलोपचारैः
कथञ्चिदुज्जीवयितुं स शक्यः ।।

: ४४ :

पत्न्यां प्रियायां विमनायितायां
फ़ीरोज़गान्धीं समया स्थितायाम् ।
कालस्य तावद्वशमागतः सन्
प्राणान्प्रियानेष मुमोच धीरः ।।

: ४५ :

असह्यमेतन्निधनं प्रियस्य
बभूव शोकात् पुनरिन्दिरायाः ।
सुखेषु सर्वेष्वपि सत्सु सत्यं
पत्या वियोगो हृदयं दुनोति ॥

: ४६ :

कालेन गाढं प्रहृताऽपि देवी
धैर्यं न सा धैर्यधना मुमोच ।
स्वं पर्यवस्थाप्य च कृत्यजातं
यथाकथञ्चिन्निरुवाह सम्यक् ॥

: ४७ :

(आर्यावृत्तम्)

पतिरस्या उपयातः
पुण्याँल्लोकान् विलक्षणप्रतिभः ।
अल्पीयसि खलु वयसि
किन्नु स्याद् दुःखमतः परतरम् ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
द्वाविंशः सर्गः ॥

(मालिनीवृत्तम्)

: १ :

भरतभुवि समिद्धेनौजसा संविभान्ती
व्यधित गिरिकृते सा युक्तियुक्तं प्रयत्नम् ।
विजयमथ महान्तं लब्धवानेष यस्मा-
दुपकृतमपि भूयः स्वं तया स प्रपेदे ॥

: २ :

नहि समभवदस्य स्वप्रभावाज्जयोऽय-
मपर उपनतोऽभूदत्र कश्चित्प्रभावः ।
इति सकलमवेदीद् भारतीयो जनोऽत्र
नहि भवति कदाचिद् वृत्तमीदृग्रहस्यम् ॥

: ३ :

विजयमिममपूर्वं सोऽवबुध्येन्दिराया
वशमुपगत आसीत् सर्वभावेन तस्याः ।
निजवशमुपयातं तं च बुद्ध्वेन्दिराऽसा-
वितरजनदुरापां शक्तिमापाप्रधृष्या ॥

: ४ :

भरतभुवममुष्यां पञ्च वर्षाणि दीर्घा-
ण्यतिकुशलतयैवापत्यवत् पालयन्त्याम् ।
अभवदहह ! तावत् पूर्वभूभाग आराद्
दवदहन इवोग्रा काचिदापत्प्रवृत्ता ॥

: ५ :

यवनबहुल आसीद् बङ्गभागोऽत्र योऽसौ
विलसति स हि पाकिस्थानभागात्मना स्म ।
यवनबहुलताऽभूद्भारतेंऽशेऽपि यत्रा-
ऽभवदभिनवदेशस्यैव सोऽप्यंश आशु ॥

: ६ :

व्यतिगतवति काले प्रादुरासीत् प्रकोपः
कतिपय इह पुंसां स्वां स्थितिं प्रेक्ष्य दीनाम् ।
व्यधिषत नहि चिन्तां शासितारस्तु तेषां
व्यवहितिरिति हेतुस्तत्र मध्यस्थतायाम् ॥

: ७ :

अभवदभिनवस्यांशद्वयं राष्ट्रकस्य
व्यवहितमतिदूरे सन्निविष्टं मिथश्च ।
अलमकृत तु बङ्गः पूर्वकाष्ठाममुष्य
विविधशकलक्लृप्तश्चान्यभागः प्रतीचीम् ॥

: ८ :

जनिरजनि जनानां सङ्घवर्यस्य साधोः
कतिषुचिदित इत्थं वत्सरेषु द्रुतेषु ।
बहुजनपरिपूर्णेऽवामिलीगाभिधस्य
प्रकृतिसुरमणीये प्राग्भवे बङ्गदेशे ॥

: ९ :

त्रिभुवनमहितोऽयं देश एषोऽस्मदीयो
विलसति सुषमाऽस्याकृत्रिमा सर्वदिक्षु ।
प्रकृतिरतिमुदेमं सर्वसौभाग्यसम्पत्-
परिगतमतनिष्ट स्वर्गतुल्यं जगत्याम् ॥

: १० :

अगणितजलधारा अत्र रम्या वहन्ति
प्रतिदिशमिह शस्यश्यामला भूर्विभाति ।
नयनयुगलरम्यान् ऊर्मिमद्भिस्तटान्तान्
जलधिरतिविशालः क्षालयत्यम्बुपूरैः ॥

: ११ :

विविधवनवनस्पत्योषधीनां समृद्धि-
र्बहुविधखनिजानां दुर्लभानां चयश्च ।
अधिकतरविभूतिं हन्त ! देशोत्तमस्य
पटुतरजनजुष्टामस्य संसूचयन्ति ॥

: १२ :

विपुलविभवशाली सत्यमस्मत्प्रदेशो
विभवमपहरन्ति त्वन्यभागस्थलोकाः ।
इत इति भृशमासन्नत्र लोका विषण्णा
जननभुव उपेक्षां मानिनो नो सहन्ते ॥

: १३ :

नहि विभवमहार्षुः केवलं पश्चिमस्था
अपि तु बलवदेवारोपयंस्तत्र धृष्टाः ।
भुवि जननिवहस्यासंस्तुतां वाचमुर्दूं
मधुरमधुररूपां बङ्गभाषामपास्य ॥

: १४ :

सकलमिदमसह्यं मेनिरे बङ्गलोकाः
परकृतमवमानं सेहिरे नागुकं च ।
समभवदतिरम्या मातृभूमिर्यथैषां
सकलगुणसमृद्धा मातृभाषाऽपि तद्वत् ॥

: १५ :

क्व नु जगति सुदीप्रा संस्कृतिर्बङ्गदेश्या
क्व नु च विकृतिजुष्टा पद्धतिर्बर्बराणाम् ।
किमिति वयममीषां योजनानां सहस्रा-
दिह समुपगतानां शासनीया भवामः ॥

: १६ :

इति मनसि विचिन्त्य प्राप्तरोषा हि बाङ्गाः
कथमपि जनसङ्घा आत्ममुक्तिं लषित्वा ।
क्षणमपि नहि लब्ध्वा निर्वृतिं शिश्रियुस्ते
बहुतरकमुपायं कृत्यजाते प्रवीणाः ॥

: १७ :

निजभुवि निजमेव स्यात्सुखं शासनं द्राक्
भवतु खलु विदेश्या नीतिरेवं च रक्षा ।
परिवहणविधिश्चेत्येतदेव त्रयं तु
सकलजनहितार्थं केन्द्रसच्छासनेऽधि ॥

: १८ :

इति मतमिदमग्र्यं सर्व एवाभ्युपेत्य
प्रबलतरसदस्तेऽवामिलीगं प्रपन्नाः ।
दिशि दिशि सदसस्तस्याऽऽविरासीच्च घोषो
जयतु जयतु नित्यं स्वर्णबङ्गोऽस्मदीयः ॥

: १९ :

इति सकलजनानां पश्चिमस्थैर्जनौघै-
र्दवदहन इवेद्धः पूर्वबङ्गे विरोधः ।
कियतिचिदथ काले लोकसंसत्सदस्य-
वरणसमय आयात्तत्र देशे वरेण्ये ॥

: २० :

अभवदिह तु पीपल्स् पार्टिनाम्ना प्रसिद्धा
जनसमितिरथैका पश्चिमे देशभागे ।
विलसति च तथा स्माऽवामिलीगाभिधाना
जनसमितिवराऽन्या बङ्गनाम्नि प्रदेशे ॥

: २१ :

वरणविधिसमाप्तौ बङ्गदेश्या प्रसिद्धा
समितिरधिजगाम श्रीमुजीबप्रधाना ।
बहुमतमिति तस्याः शासनं सर्वराष्ट्रे
भवतु मतमितीदं बङ्गदेश्या विवव्रुः ॥

(उपजातिवृत्तम्)

: २२ :

काले कठोरं समभूत्तु पाकि-
स्थाने तदा सैनिकशासनं हा ! ।
यह्याभिधानश्च नृशंसकर्मा
तस्मिंस्तदा राष्ट्रपतिर्बभूव ॥

: २३ :

भुट्टोऽभिधश्चापि नरोऽत्र कश्चिद्
विदेशमन्त्री चलबुद्धिरासीत् ।
यन्मन्त्रणाया वशमागतः सन्
'मूढः परप्रत्ययनेयबुद्धिः' ॥

: २४ :

तत्कर्म यह्या व्यदधान्न यत्स्यात्
स्वप्नेऽपि केनाऽपि विचिन्तितं हा !
अवामिलीगाय जयं गताय
न शासितुं स्वं ह्यददात् स देशम् ॥

: २५ :

न केवलं नेदमसावकार्षीद्
घोरं ततो गर्ह्यमथाप्यचारीत् ।
आक्रान्तवानेष निजं प्रदेशं
बङ्गाभिधं सैन्यदलैरकस्मात् ॥

: २६ :

शशाङ्कसप्तिग्रहचन्द्रसङ्ख्ये
वर्षे त्रयोविंशदिने नृशंसः ।
मार्चाख्यमासस्य, निरुद्धवांश्च
बङ्गीयनेतारमसौ मुजीबम् ॥

: २७ :

रात्राविदं कर्म चकार घोरं
स स्मारयन् सौप्तिकपर्व यह्याः ।
आदेशमस्य प्रतिपालयन्ति
सैन्यानि हिंसाभिरतानि तत्र ॥

: २८ :

घोरं जनानां कदनं प्रचक्रु-
स्तद्वस्तुजातस्य विनाशनं च ।
नानादिनान्येवमभूत्प्रवृत्त-
मनागसां हिंसनमेव हन्त ! ॥

: २६ :

विशेषतो बुद्धिमतां विचार्यं
विचायमत्राऽक्रियत प्रणाशः ।
पुंसां, न येन प्रभवेत्प्रदेशः
कथञ्चिदुत्थापयितुं चिरं स्वम् ॥

: ३० :

रात्रिर्यदैषा व्यगमत्सुदीर्घा
घोरेव सत्यं प्रलयस्य रात्रिः ।
हिंसानटीताण्डवनर्तनेन
रोमाञ्चिताः प्रव्यथितान्तरङ्गाः ॥

: ३१ :

नाशं स्वदेशस्य विधीयमानं
स्वदेशजैरेव निशाम्य घोरम् ।
पदाहताशीविषतुल्यरूपा
आहारयन्नात्मनि मन्युमुग्रम् ॥

: ३२ :

महान्तमुद्घोषमतानिषुश्च
स्वतन्त्रतायाः परमप्रवीराः ।
अवामिलीगस्य समेऽपि नेतृ-
वर्याः समुद्धर्षमुपेयिवांसः ॥

: ३३ :

अतः परं स्यान्नहि नोऽङ्गभूता
रम्या च ऋद्धा च सुखप्रदा च ।
बङ्गाभिधाना वसुधेति पाकि-
स्थानाख्यदेशस्य गिरं त ऊचुः ॥

: ३४ :

देशः स्वतन्त्रो भुवि नोऽस्तु पाकि-
स्थानस्य पाशात्सुदृढाद्विमुक्तः ।
अद्यावधीति प्रविनेदुरेते
सिंहोरुसत्त्वा भुवि सिंहनादम् ॥

: ३५ :

बङ्गाः पृथङ् नो भवितुं लषन्ती-
त्येतत्प्रबुध्यात्तमहाप्रकोपाः ।
यह्यादयो घोरतरेषु कर्म-
स्वाविष्टरूपा इव सम्प्रवृत्ताः ॥

: ३६ :

तत्सैनिकास्तद्वशगा नृशंसा-
स्तत्कर्म चक्रुर्न बभूव यत्प्राक् ।
अघ्नञ् जनांस्ते शतशोऽनलं च
गृहेषु तेषामददुः सुखेषु ॥

: ३७ :

कुलस्त्रियस्ते कुलपांसनाश्च
व्यदूषयंस्तासु बलात्प्रवृत्ताः ।
पैशाचवृत्तिं परिगृह्य घोरा-
ममानुषं कृत्यमतानिषुश्च ॥

: ३८ :

स्वानां समक्षं नरराक्षसाः स्त्री-
र्निन्युः कदाचिद्वसतीर्निजास्ते ।
अन्याय्यमेतासु चरन्त आत्म-
न्यस्थापयंस्ताः समयं च दीर्घम् ॥

: ३९ :

एवं स्थिते स्वं परिपातुकामाः
सहस्रशश्चाप्यथ लक्षशश्च ।
जनाः प्रपन्नाः शरणं शरण्यं
देशोत्तमं भारतदेशमेव ॥

: ४० :

निरन्तरा पङ्क्तिरिहाजगाम
बङ्गेभ्य आपः सरितां यथैव ।
क्लेशातुराणां सुतरां जनाना-
मकिञ्चनानां शरणार्थिनां च ॥

: ४१ :

मासानथाष्टेत्थमभूत्स्थितिर्हा !
जना उपाजग्मुरनारतं च ।
कालेन जाताः खलु कोटिसङ्ख्या
भोज्यानि वस्त्राणि समर्प्यमाणाः ।।

: ४२ :

नातीव ऋद्धः खलु भारताख्यो
देशः स्वयं तत्र तथाप्यनेन ।
कालं वितेने बहुमेवमेषा-
मातिथ्यसत्कारविधिः प्रसिद्धः ।।

: ४३ :

बङ्गेषु बद्धस्थितिकैरथान्यै-
र्मुक्तिं स्वकीयां मनसा लषद्भिः ।
कृताऽभवन्मुक्तिपरैस्तु मुक्ति-
वाहिन्यभिख्या खलु वाहिनी द्राक् ।।

: ४४ :

प्रशिक्षिता नैव भटास्तदीया
अत्यल्पशस्त्राणि च धारयन्तः ।
सङ्कल्पशक्त्यैव विशालपाकि-
स्थानस्य सैन्याय रणं वितेरुः ।।

: ४५ :

नैतद्विना भारतदेशसाह्यं
शक्नोति तावद् भवितुं कथञ्चित् ।
एतेन भूयः प्रविदह्यमानः
सन्देहदंशेन भयङ्करेण ॥

: ४६ :

आ स्थापनायाः रिपुतां प्रपन्नो
मूर्च्छां गतः सम्प्रति मन्युना च ।
दिशाम्बरे मासि बलेन पाकि-
स्थानाभिधोऽतर्कितमेव देशः ॥

: ४७ :

आक्रान्तवान् भारतभूप्रदेशान्
आक्षेपयत्तत्र च वह्निगोलान् ।
सुप्तेषु लोकेषु विमानजातात्
सर्वं तदाभात्सुतरामसह्यम् ॥

: ४८ :

अतर्किते सङ्कट एवमत्र
प्राप्तेऽतिभीमे पटुरिन्दिराऽऽसीत् ।
प्रधानमन्त्रित्वपदं दधाना
स्फूर्तेश्च धैर्यस्य च भव्यमूर्तिः ॥

: ४९ :

(मन्दाक्रान्तावृत्तम्)

यद्यप्यासीद् बहुजनभृतश्चीनदेशः सहायो
यद्यप्यासीच्च देशो विभवपरिगतोऽमेरिकानामधेयः ।
पाकिस्थानस्य मित्रं तुमुल इह रणे भारतेन प्रवृत्ते
नैवाभूदिन्दिरायाः क्षणमपि हृदयं कम्पितं सत्तमायाः ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
त्रयोविंशः सर्गः ॥

(मन्दाक्रान्तावृत्तम्)

: १ :

आदेशं ते स्वजननभुवो रक्षणायाधिगत्य
तस्याः, कालं स्थितमपि पुरः सर्वथोपेक्षमाणाः ।
वीराः प्राणान् दृढतरधियो मन्यमानास्तृणाय
सीम्नो भूमेस्त्वरिततरकं क्रान्तवन्तो रिपूणाम् ॥

: २ :

पूर्वस्मिंश्चावृतदथ तदा पश्चिमे देशभागे
बङ्गे छम्बे च तुमुलतरः सङ्गरश्चापि सिन्धौ ।
योधास्तत्र प्रथितयशसो भारतीया विवव्रुः
शौर्यं दिव्यं रिपुभटवरान् पाकदेश्यान् विजेतुम् ॥

: ३ :

बङ्गान् कृत्वा सपदि वशगान्ख्यातशौर्यातिरेका
हर्षोत्कर्षाज्जयमुपगता भारतीया विरेजुः ।
आच्छिन्ना तैरभवदवनिर्योजनानां शतानि
शत्रुभ्योऽतिप्रबलसमरे सिन्धुदेशेऽपि दीर्घे ॥

: ४ :

नानाग्रामानथ पुरवरान् बङ्गदेशस्य जित्वा
ढाकापुर्याः स्थितिमचकलन् भारतीया उपान्ते ।
तत्रस्थाश्चाभिभवमभितो लक्षयित्वा हताशाः
सैन्येभ्यः स्वं खलु परभटा नोऽर्पयामासुराशु ॥

: ५ :

एवं लक्षं परपरिभवव्रीडिताः शत्रुयोधा
मैदानाख्यं द्रुतमुपगता भूविभागं विशालम् ।
ढाकापुर्याः स्वयमचकलन् बन्दिभावं ततस्ते
नीताः कालं सुखमगमयन् भारते वर्षमेकम् ॥

: ६ :

छम्बक्षेत्रे हि समभवदहो ! काचिदेवावहेला
सैन्यानां नः प्रबलतरविधिः किन्न कुर्यात्प्रतीपः ।
कश्चिद् भूमेररिकरगतः सम्बभूवात्र भागो
नैकैर्ह्यासिंस्त उपकरणैः संयुताः शक्तिमन्तः ॥

: ७ :

पाकिस्थानात्समुपगतवान् बङ्गदेशो विमुक्तिं
जातोऽरीणां मनसि भयदो भारते हर्षवर्षः ।
ऊर्ध्वं तस्माद्विरतिमगदत् सङ्गरस्येन्दिरा द्राक्
चण्डीवोग्रा जगति विदिता दैत्यसंहारतुष्टा ॥

: ८ :

देशोऽस्माकं लषति वसुधां नो परेषां कथञ्चित्
कृत्वैतत्सा मनसि रिपुभिर्मन्त्रणां संविधाय ।
ये ये देशाः प्रविजितचरास्तान् स्वयं तेभ्य एव
प्रादात्ते चापि विजितचरान् भूमिभागानदुर्नः ॥

: ९ :

ये नश्वासन् भुवि परभटा लक्षसङ्ख्या निरुद्धाः
पाकिस्थानं प्रत्यभिगमितास्ते स्वयं भारतेन ।
एतत्सर्वं सुकरमभवद्वार्तया श्यामलायां
पाकिस्थानप्रमुखसचिवस्येन्दिरायाश्च सत्यम् ॥

: १० :

रम्ये तावद् गिरिपुरवरे यत्र सिद्धान्त एष
सद्यः सन्धौ स्वयमुपगतो लोककल्याणबुद्ध्या ।
अन्योन्यं स्यात्पुनरपि सुहृद्भाव आत्यन्तिको यच्
छान्तिर्दिव्या सुखयतु मनश्चात्र पुंसां प्रकामम् ॥

: ११ :

ये सङ्घर्षाः, शममुपगताः सन्तु तेऽन्योन्ययत्नै-
र्हस्तक्षेपं कथमपि परे नैषु देशा विदध्युः ।
स्वार्थस्तेषां सकलकलहेष्वस्ति नास्मद्धितं च
सिद्धान्तोऽयं दृढमुपगतो हर्षवर्षं ततान ॥

: १२ :

युद्धक्लेशान् समनुभवतोर्देशयोर्दुःखभाजो-
राश्रित्येमं पुनरपि बभौ सौहृदं कामदोग्ध्रृ ।
वाणिज्यादि प्रविरतमभूद्यत् पुनस्तत्प्रवृत्तं
सञ्चाराद्याः पुनरपि च मिथो देशयोः सम्प्रवृत्ताः ॥

: १३ :

वेदाङ्गाश्वग्रहशशिमिते वत्सरे यत्नजाते-
नैतज्जातं सकलजनतासौख्यदं सर्वमेव ।
सम्बन्धश्चाप्यतिसुखकरो दूतसम्प्रेषणादिः
संवृत्तोऽस्माद्विलसति सुहृद्भावना देशयुग्मे ॥

(उपजातिवृत्तम्)

: १४ :

स्नेहस्य बन्धोऽयमभून्न पाकि-
स्थानाभिधेनैव हि केवलेन् ।
देशेन चीनेन च सम्प्रवृत्तो
वर्षाणि नाना विरतिं गतोऽयम् ।

: १५ :

वेदाङ्गसप्तिग्रहचन्द्रसङ्ख्ये
संवत्सरे तेन पुनः प्रवृत्तः ।
हर्षप्रकर्षं जगति प्रवर्षन्
स्नेहाभिवर्धी खलु दौत्यबन्धः ॥

: १६ :

(स्रग्धरावृत्तम्)

श्रीलङ्का नाम देशः प्रविलसतितरां दक्षिणे दिग्विभागे
नेपालाख्यश्च देशो हिमगिरिशिखरे शेखरः संश्चकास्ति ।
देशौ हन्त ! प्रयातौ कथमपि विषये नः परां भ्रान्तिमेतौ
यैनासीत्सौहृदय्यं किमपि विरलतां यातमस्माकमाभ्याम् ॥

(उपजातिवृत्तम्)

: १७ :

नेदं समीचीनमिति प्रयत्नं
महान्तमाश्वादधदिन्दिराऽत्र ।
येनैनयोर्भ्रान्तिरपाकृताऽभू-
न्मैत्री पुनर्हृद्यतरा च वृत्ता ।।

: १८ :

अन्यच्च कार्यं बहु शासनेऽस्याः
प्रोत्साहनेनाभवदिन्दिरायाः ।
सर्वस्य लोकस्य विलक्षणत्वाद्
यद्विस्मयं सन्ततमातनोति ।।

: १९ :

तथा हि जातं परमाणुतत्त्व-
विस्फोटनं लोकहिताय भूयः ।
अवर्णनीया परमाणुशक्तिः
सिद्धा सती लोकहितं विदध्यात् ।।

: २० :

कर्माद्भुतं पोखरणाभिधेऽभू-
दिदं सुदीर्घे मरुभूमिभागे ।
समुद्रसप्तिग्रहचन्द्रसङ्ख्ये
संवत्सरेऽष्टादशवासरेऽह्ना ।।

: २१ :

विस्फोटनं नाशनयन्त्रहेतु-
रिदं कदाचिन्न भविष्यतीति ।
आश्वासयामास जगत् समग्रं
चिन्ताकुलं नेतृवरेन्दिरा द्राक् ॥

: २२ :

शमप्रधानः खलु देश एष
नाशं न कस्याप्यभिरोचयेत ।
एतादृशी नाम परम्पराऽत्र
न प्राणिहिंसाऽभिमताऽत्र पुंसाम् ॥

: २३ :

मैत्री समैरत्र जनैरभीष्टा
कल्याणबुद्धिः प्रसृताऽत्र साध्वी ।
अत्रैव पूर्वे ऋषयोऽभ्यवोचन्
कुटुम्बमेकं वसुधां समग्राम् ॥

: २४ :

कर्मापरं तादृशमेव वृत्तं
विचिन्तितं केनचनाऽपि नो यत् ।
बलप्रयोगेण विनैव तावद्
देशोत्तमस्य प्रथितस्य जातः ॥

: २५ :

लोकाग्रहात्सिक्किमनामकस्य
देशेऽस्मदीये विलयोऽतिहारी ।
यस्मादुभौ देशवरौ प्रपन्नौ
देशैकतां सर्वजनानुकूलाम् ॥

: २६ :

हिमालये नाम नगाधिराजे
विराजते सिक्किमनामधेयः ।
देशः पितुः क्रोडमिवोपपन्नो
विलक्षणां स्वां सुषमां दधानः ॥

: २७ :

यं देशवर्यं समया विभान्ति
तुङ्गानि शृङ्गाणि हिमावृतानि ।
हिमालयस्य प्रथितानि दिक्षु
सर्वस्य लोकस्य सुखाकराणि ॥

: २८ :

सुखानि रम्याणि च यत्र भान्ति
श्यामानि दीर्घाणि च काननानि ।
शीताः शिवाः शीकरिणः समाया
भूयोऽन्तरं यत्र च वान्ति वाताः ॥

: २९ :

नेपालदेशाभिजनाः स्वदेशे
जाताश्च चीनाभिजना जनाश्च ।
देशं चिरात् सिक्किमनामधेय-
मिमं सुखेनाधिवसन्ति हृद्यम् ॥

: ३० :

चोग्यालनाम्ना क्षितिपाः शशासु-
र्देशं स्वकं रम्यमिमं चिराय ।
अयं स्वतन्त्रोऽपि बभूव सत्यं
सुरक्षितो भारतशासनेन ॥

: ३१ :

विद्वानपीदं सुतरामविद्वान्
चोग्यालराजोऽत्र बभूव यः सः ।
प्रजासु सम्यङ् न चचार येना-
सन्तोष एतं प्रति तासु जातः ॥

: ३२ :

कांग्रेसनामाभवदत्र किञ्चित्
सदो न यच्छासनमस्य सेहे ।
जनप्रियं तत्सुतरां स्वकीयं
प्रचारयामास मतं वरीयः ॥

: ३३ :

लोकप्रियं शासनमत्र सद्यः
प्रवर्तितं स्यादिति तन्मतेन ।
निर्वाचनं तत्र बभूव, यत्र
कांग्रेससंज्ञं सद आससाद ॥

: ३४ :

अभूतपूर्वं जयमित्यनेन
तच्छासनं तत्र बभूव काम्यम् ।
वृत्तं च तद्भारतमाह तेऽङ्गं
देशो भवेत्सिक्किमनामकोऽयम् ॥

: ३५ :

तत्प्रार्थनामभ्युपपद्य सद्यो-
ऽतिपावनो भारतदेश एषः ।
अन्तश्चकारात्मनि रम्यरूपं
देशं लघुं सिक्किमनामधेयम् ॥

: ३६ :

द्वाविंशती राज्यवराणि सन्ति
पृथौ यथा भारतभूमिभागे ।
तथा त्रयोविंशमिहेदमासीत्
प्रख्यापयत्कौशलमिन्दिरायाः ॥

: ३७ :

एवं च सम्यग् रचितः स्वदेशे
सत्प्रेरणायाः फलमिन्दिरायाः ।
उपग्रहो यो भुव आततान
परिक्रमानार्यभटाभिधानः ॥

: ३८ :

पाश्चात्यदेशेषु समृद्धिमत्सु
नेदं भवेद्विस्मयकारि किञ्चित् ।
विज्ञानशिक्षा प्रथिमानमाप्ता
यन्त्राणि चित्राणि हि तत्र सन्ति ॥

: ३९ :

नैषा स्थितिर्भारतभूमिभागे
तथा न ऋद्धः खलु देश एषः ।
तथाविधान्यत्र च साधनानि
नह्येव सन्तीति विभावनीयम् ॥

: ४० :

वैज्ञानिकानां धुरि कीर्तनीयै-
रनारतं यत्नमुपाश्रयद्भिः ।
अनुष्ठितं भारतदेशजातैः
कर्मेदमित्यद्भुतमेव भाति ॥

: ४१ :

देशोऽस्मदीयः परमाणुतत्त्व-
विस्फोटनेन प्रथितेन दिक्षु ।
उपग्रहस्यार्यभटस्य चापि
निर्माणकार्येण विलक्षणेन ॥

: ४२ :

समुन्नतस्य प्रथितस्य देश-
जातस्य पङ्क्तौ विनिविष्ट आस्ते ।
निर्देशनं प्रेरणमा फलाप्ते-
र्हेतुत्वमत्रागमदिन्दिरायाः ॥

: ४३ :

न्यासालयानां धनराशिरस्तु
निजस्य देशस्य हिते प्रयुक्तः ।
इत्येवमास्थाय मतिं सुजातां
स्वदेशकार्याभिरतेन्दिराऽभूत् ॥

: ४४ :

समादिशत्तेषु चतुर्दशानां
राष्ट्राधिकारं सुधियां वरेण्या ।
समादधे नैकविधास्तथा च
गूढाः समस्या मतिवैभवेन ॥

: ४५ :

पृथग्भवेत्पञ्चनदप्रदेश
इत्यास्त लोकस्य मतिर्दृढाऽत्र ।
श्रीनेहरोः कालत एव वृत्त-
मान्दोलनाद्यत्र विषादकारि ॥

: ४६ :

बहूनि वर्षाणि च सन्ततं तत्
प्रशासने कष्टमपारमाधात् ।
प्रारम्भ एवानयदेषकेदं
प्रधानमन्त्रित्वपदस्य शान्तिम् ॥

: ४७ :

दृढेन चित्तेन च साहसेन
विवेकबुद्ध्या परया च युक्ता ।
अघोषयत्पञ्चनदप्रदेश-
निर्माणमेषा सुविचिन्त्य नूत्नम् ॥

: ४८ :

येनाभवच्छान्तमुपद्रवादि
दुःखाकरं चात्र विहिंसनादि ।
शान्तोर्मिपाथोनिधिवत् प्रशान्ता
अस्या जनाः पाटवमभ्यनन्दन् ॥

: ४९ :

समादधे सा किल पाटवेन
तेनैव कश्मीरगतां समस्याम् ।
नादेयवारीण्यधिकृत्य चापि
समादधे सा गहनाः समस्याः ॥

: ५० :

तत्पाटवं हन्त ! बभूव भूयः
सङ्घर्षकाले विशदं शुभायाः ।
दशद्वयाब्दावधिकेन रूस-
देशेन सत्सौहृदसन्धिनाऽपि ॥

: ५१ :

बङ्गेषु सङ्घर्षरतेषु लोके-
ष्वनारतं भारतमापतत्सु ।
रूसेन साह्यं भृशमभ्यदायि
नो नाम नामेरिकयांशतोऽपि ॥

: ५२ :

युद्धे प्रवृत्ते तुमुले च पाकि-
स्थानेन नः साह्यमदायि तेन ।
रूसेन शस्त्रास्त्रवरैरनेकैः
समर्थनं नश्च भृशं व्यधायि ॥

: ५३ :

नेतृत्वमेषा विदधे जनानां
सङ्घर्षकाले दृढबुद्धियुक्ता ।
शक्तोऽभविष्यन्नहि तद्विधातु-
मन्यो जनो भारतभूमिभागे ॥

: ५४ :

इत्येव तावद् गिरिनामधेय-
स्तत्कालराष्ट्राधिपतिर्विचार्य ।
शशाङ्कसप्तिग्रहचन्द्रवर्षे
दिशाम्बरेऽष्टादशवासरे ताम् ॥

: ५५ :

उपाधिना भारतरत्ननाम्ना
बुधाग्रगण्यां समलञ्चकार ।
गुणा भवन्त्यादरभाजनानि
लोके न लिङ्गं न वयश्च सत्यम् ॥

: ५६ :

(अनुष्टुब्वृत्तम्)

एवं सा बुद्धिमच्छ्रेष्ठा साधु शासनमाचरत् ।
विशाले भारते देशे ख्यातिं च परमामगात् ।

: ५७ :

साधु शासनमेतस्यां चरन्त्यामपि केचन ।
अशान्तमनसो लोका अनिष्टं विदधुर्बहु ॥

: ५८ :

वृथाऽऽक्षेपानमुष्यां ते ददुरन्याय्यचिन्तनाः ।
अध्यक्षैप्सुस्तथा चैनां मुधैवाहितकाम्यया ॥

: ५९ :

पाकिस्थानेन युद्धेन महार्घत्वमजायत ।
दौर्लभ्यं चापि वस्तूनां सर्वं कालप्रचोदितम् ॥

: ६० :

युद्धादनन्तरं वर्षे वासवो न ववर्ष ह ।
भक्ष्यभोज्यादिवस्तूनां ततो दुर्लभताऽभवत् ॥

: ६१ :

दौर्लभ्यमभिलक्ष्यैषां दुर्बुद्धया चोदिता भृशम् ।
अत्रत्या वणिजो नैके वस्तुसङ्ग्रहमाचरन् ॥

: ६२ :

नैवात्र सन्ति तानीति समुद्घुष्य वचो न ते ।
आपरोषु स्वकीयेषु बहिः पण्यानि तेनिरे ॥

: ६३ :

अलक्षिताः परैश्चापि तान्येवैते कुबुद्धयः ।
मूल्येन भूयसा लुब्धाः क्रेतृवर्गेऽददू रहः ॥

: ६४ :

उत्कोचादिप्रदानं च तदादानमनिष्टकृत् ।
सर्वत्र प्रसृतं देशे महारोग इवाभवत् ॥

: ६५ :

वृत्तपत्राण्यनेकानि वृत्तमुच्छृङ्खलं बहु ।
स्वैरं प्रकाशयामासुः शासनप्रतिरोधकृत् ॥

: ६६ :

अन्यदेशेभ्य आनैषुः पदार्थान् बहुमूल्यकान् ।
देशस्य घातकाः केचित् तास्करीं वृत्तिमाश्रिताः ॥

: ६७ :

आन्दोलनादिवृत्तिश्च विनिवृत्तिश्च कर्मणाम् ।
नैकेषु व्यवसायेषु विद्याशालेष्वसंयमः ॥

: ६८ :

राजकीयनिकायेषु सर्वत्रैवाभ्यदृश्यत ।
याथाकामी प्रवृत्तेव सर्वलोकस्य दुःखदा ॥

: ६९ :

प्रवृत्तिश्चैव हिंसाया हृदि पुंसां पदं दधौ ।
केन्द्रमन्त्री वशाद्यस्य मिश्राख्यो निधनं गतः ।।

: ७० :

उच्चन्यायालये चापि न्यायाधीशप्रधानताम् ।
भजन् रायाभिधः स्वस्य वाहने वह्निगोलकम् ।।

: ७१ :

ददर्श, दिष्ट्या न च तद् विस्फोटमगमत्किल ।
प्राणरक्षाऽभवद्येन न्यायमूर्तेः कथञ्चन ।।

: ७२ :

एतादृश्यां स्थितौ किञ्चित्कार्यं कार्यं हि तादृशम् ।
येनाराजकताऽऽधत्तां चिररात्राय नो पदम् ।।

: ७३ :

देशोऽयं न भवेच्चापि खण्डितोऽन्योन्यविग्रहैः ।
अचिरोपार्जितं चास्य स्वातन्त्र्यं नापगच्छतु ।।

: ७४ :

एतत्सर्वं समालोच्य कृतबुद्धिर्विदां वरा ।
आपत्स्थितेः समुद्घोषं स्वदेशे निर्भया व्यधात् ।।

: ७५ :

तत्समुद्घोषमात्रेण सर्वं सांराविणं गतम् ।
शान्तिमित्यभवच्चित्रं चित्रोल्लिखितमूर्तिवत् ॥

: ७६ :

षड् दलानि ह्यवैधानीत्यप्येषाऽऽदिशद् द्रुतम् ।
तत्सदस्यास्तदादेशात्कारासु च निपातिताः ॥

: ७७ :

समाजशत्रवश्चान्ये ये चासंस् तस्करादयः ।
तेऽपि तावद् द्रुतं सर्वे बन्दिगेहेषु पातिताः ॥

: ७८ :

उद्धारं स्वस्य देशस्य लषन्ती तदनु ध्रुवम् ।
विंशतिसूत्रकं कार्यक्रममेषोदघोषयत् ॥

: ७९ :

(विद्युन्मालावृत्तम्)

देशो मेऽयं सौख्यं लब्ध्वा
तापोच्छित्तिं चाप्त्वा सद्यः ।
लोके यायात्ख्यातिं दिव्या-
मित्येषाऽऽस्ते चिन्ता ह्यस्याः ॥

॥ इति डा०सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
चतुर्विंशः सर्गः ॥

(पञ्चचामरवृत्तम्)

: १ :

न यावदेव देशमेनमात्मनः प्रियं निजं
निभालयेय सर्वथा समुन्नतं मुदा युतम् ।
न तावदेव मे मनो लभेत निर्वृतिं परा-
मितीन्दिरा प्रयत्नमातनोत् तदर्थमद्भुतम् ॥

: २ :

विनाऽऽर्थिकैर्न साधनैरपेक्षितैर्ध्रुवं भवेत्
सुखं मनागपीति चिन्तने रता विदां वरा ।
फलं स्वकीयचिन्तनस्य नूत्नकार्यपद्धतिं
प्रचारयाम्बभूव सा स्वदेशसौख्यवर्धिनीम् ॥

(उपजातिवृत्तम्)

: ३ :

विनार्थऋद्धिं न समग्रमस्मत्-
स्वातन्त्र्यमित्येतदियं प्रपद्य ।
कार्यक्रमं विंशतिसूत्ररूप-
मुद्घोषयामास सुचिन्तितं स्वम् ॥

: ४ :

नैकाः शताब्दीरिह शोषिता ये
क्रूरैर्जना वार्धुषिकैर्यथेच्छम् ।
स्वातन्त्र्यशब्देन भवेन्नु कोऽर्थ-
स्तेषां जनानां हतभाग्यकानाम् ॥

: ५ :

नैवस्ति सूच्यग्रमिताऽपि भूमिः
　कुटीरकं वाऽपि च नास्ति येषाम् ।
　　स्वातन्त्र्यशब्देन भवेन्नु कोऽर्थ-
　　　स्तेषां जनानां हतभाग्यकानाम् ॥

: ६ :

ऋणं न निर्यातयितुं समर्थाः
　स्वं बन्धकत्वं बत ! ये नयन्ति ।
　　स्वातन्त्र्यशब्देन भवेन्नु कोऽर्थ-
　　　स्तेषां जनानां हतभाग्यकानाम् ॥

: ७ :

अनारतं ये श्रममाचरन्ति
　तथाऽपि दीनाश्च दरिद्रिताश्च ।
　　स्वातन्त्र्यशब्देन भवेन्नु कोऽर्थ-
　　　स्तेषां जनानां हतभाग्यकानाम् ॥

: ८ :

ज्ञानेऽन्यदेशेषु गतेऽपि वृद्धिं
　नैवाक्षरज्ञानमिहास्ति येषाम् ।
　　यशब्स्वातन्त्र्देन भवेन्नु कोऽर्थ-
　　　स्तेषां जनानां हतभाग्यकानाम् ॥

: ९ :

न यावदेते सुखिता भवन्ति
कष्टश्रिता भारतभूमिभागे ।
क्लान्तिर्व्यपेयान्मनसो न तावत्
शान्तिः पदं नैव च तत्र दध्यात् ।।

: १० :

दशा ह्यमीषां कथमुन्नता स्या-
दमी सुखं चापि कथं लभन्ताम् ।
विज्ञेन्दिरा सर्वमिदं विचार्य
कार्यक्रमं साऽऽर्थिकमादिदेश ।।

: ११ :

कार्याणि कार्याणि बहूनि देशे
सन्त्येषु मुख्यानि पुनर्मतानि ।
विशेषतो देशहितावहत्वात्
सर्वैर्बुधैर्विंशतिसङ्ख्यकानि ।।

: १२ :

तेष्वेकमास्ते खलु शासनस्य
ह्रासो व्यये मूल्यविधावथापि ।
पण्यस्य, चान्यस्य च वस्तुजात-
स्योत्पादने वृद्धिगतः प्रयत्नः ।।

: १३ :

अपेक्षितस्यापि च तस्य सम्यक्
लोकेषु तावत्प्रतिपादनं स्यात् ।
कार्यं द्वितीयं कृषिभूमिसीमा-
निर्धारणार्थं नियमप्रक्लृप्तिः ॥

: १४ :

तेषां च सम्यक् परिपालनं द्राक्
सीम्नोऽधिकायाश्च भुवः प्रदानम् ।
भूहीनलोकेषु च कृत्स्नताया
भूलेखजातेऽथ विधिर्नवायाः ॥

: १५ :

कार्यं तृतीयं हि दरिद्रितेषु
भूहीनलोकेषु निवासहेतोः ।
भूखण्डजातप्रतिपादनं द्राक्
चतुर्थमेतद् भृतिमन्तरैव ॥

: १६ :

विष्टयाख्यगर्ह्यश्रमकारितायाः
परिक्रयप्रापितदासतायाः ।
उद्घोषणं तावदवैधताया
आस्ते बुधाः पञ्चममत्र कार्यम् ॥

: १७ :

यद्दु ग्राम्यलोकेषु ऋणस्य भारः
समाप्तिमायातु निरुध्यतां च ।
उदञ्चनं शासननिर्मितेन
श्रेष्ठेन तावन्नियमेन तस्य ॥

: १८ :

कृषीवलेभ्यः खलु दभ्रकेभ्यो
ऽथवा स्वभूम्या रहितेभ्य एभ्यः ।
शिल्पेन वृत्तिं परिकल्पयद्भ्यः
पुम्भ्योऽथवेत्यस्य सुपिण्डितोऽर्थः ॥

: १९ :

एषोऽस्ति यद्वार्धुषिका अशक्ता
अतः परं स्वस्य ऋणस्य नाम ।
उदञ्चने दुर्विधकर्षकेभ्यः
शिल्पिभ्य इत्थं च बलादनित्थम् ॥

: २० :

निर्धारणं न्यूनतमस्य षष्ठ-
मत्रास्ति कार्यं ननु वेतनस्य ।
वर्गस्य भूमिश्रमिकस्य, तस्या-
ऽह्नार्यैकबुद्ध्या परिपालनं च ॥

: २१ :

पञ्चाशता हेक्टरलक्षकैश्च
भूमेर्मितायाः खलु सेकक्लृप्तिः ।
तदन्तरस्थस्य जलस्य चाप्तिस्
तदर्थमेतद्विनियोजनं च ।।

: २२ :

उत्पादने विद्युत आशु वृद्धिः
कार्येष्विदं सप्तममस्ति कार्यम् ।
केन्द्रेऽप्यथो सूपरथर्मलाश्च
विद्युद्गृहा निर्मितिमाप्नुवन्तु ।।

: २३ :

इत्येतदास्तेऽष्टममत्र कार्यं
कार्यं तु तावन्नवमं निबोध ।
कुविन्दजातेश्च कृते हि तन्तु-
जातव्यवस्था सुविधास्तथाऽन्याः ।।

: २४ :

प्रवृत्तिमायान्तु, पटादिकानां
हस्तेन वाने नवयोजनाश्च ।
इतोऽपरं स्याद्दशमं हि कार्यं
तच्च व्यवस्था प्रतिपादनस्य ।।

: २५ :

लोकेषु सम्यग्जनतापटानां-
प्रकर्षमाधाय कमप्यमीषु ।
एकादशं कार्यमिहास्ति रम्यं
पुरेषु भूमेश्च तदर्थिकायाः ॥

: २६ :

भूमेः समाजीकरणं च रिक्त-
भुवोंऽशकानां नववेश्मनां च ।
निर्धारणं क्षेत्रफलस्य सीम्नः
कार्यं ततो द्वादशमत्र विद्धि ॥

: २७ :

सञ्चारिणां सङ्घटनं तदस्ति
परीक्षकाणां सविशेषकाणाम् ।
यदल्पमूल्यं ब्रुवतामनल्प-
स्वसम्पदोऽभिप्रतिपेदुषां च ॥

: २८ :

चौर्यं कराणामतिगर्हणीय-
मन्यादृशं वाऽऽर्थिकमाग आशु ।
वितन्वतां च प्रणयेन्महार्थं
न्याय्यं कठोरं सुपरीक्ष्य दण्डम् ॥

: २९ :

तदर्थिकां शासनसंविधानात्
सम्यक् प्रपद्य व्यवहारपद्याम् ।
त्रयोदशं कर्म परिग्रहार्थं
चिन्ता विधीनामनवद्यकानाम् ॥

: ३० :

प्रशासनेनाखिलसम्पदां द्राग्
देशान्तराच्चोरिकयाऽऽहृतानाम् ।
चतुर्दशं कार्यमिहास्ति क्लृप्ति-
रुद्योगजाते विनियोजनस्य ॥

: ३१ :

ऋजोः पथो दण्डविधेश्च वस्त्वा-
यातार्थकाङ्क्षोत्क्रमणेऽतिगर्ह्ये ।
देशद्रुहां सञ्चरतां जनानां
कार्यं पुनः पञ्चदशं निबोध ॥

: ३२ :

उद्योगजाते श्रमजीविनां स्यात्
प्रबन्धकार्ये सहयोग इष्टः ।
क्लृप्तास्तदर्थं नियमा भवन्तु
नूत्नाः प्रक्लृप्ताः खलु योजनाश्च ॥

: ३३ :

मार्गेषु सञ्चारविधेः प्रक्लृप्त्या-
याज्ञाव्यवस्था ननु राष्ट्रियाऽस्तु ।
एतद्भवेत्षोडशमत्र कार्यं
कार्यं पुनः सप्तदशं निबोध ॥

: ३४ :

येषां जनानामधिको न आयो
नास्त्येष वाऽल्पः खलु तत्कृते च ।
निर्धारितोऽस्त्वायकरस्य सीमा
मुद्रासहस्रद्वितयातिरिक्तः ॥

: ३५ :

इतः प्रभृत्यष्टसहस्रमुद्रा-
मितः करार्हत्वमियाज्जनानाम् ।
आयो न चैवास्तु स षट्सहस्र-
मुद्रामितः कर्हिचिदेतदर्हः ॥

: ३६ :

अष्टादशं कार्यमिहास्ति वस्तु-
जातस्य निर्धारितमूल्यकस्य ।
छात्रालयेषु प्रतिपादनस्य
व्यवस्थितिश्छात्रगणाय सम्यक् ॥

: ३७ :

एकोनविंशं च निबोध कार्यं
येन व्यवस्था परिकल्पिता स्यात् ।
विद्यार्थिवर्गाय निजस्य पाठ्य-
ग्रन्थादिकस्यापि च सञ्चिकानाम् ॥

: ३८ :

अन्त्यं च विंशं प्रणिबोध कार्यं
यच्छिक्षितेभ्यो नवयोजनानाम् ।
भृत्यर्थिका क्लृप्तिरिहास्तु साध्वी
प्रशिक्षणं चापि तथा जनानाम् ॥

: ३९ :

एतानि कार्याणि विलक्षणानि
प्राहेन्दिरा विंशतिसङ्ख्यकानि ।
ध्रुवं व्यपेयाद्विहितेष्वमीषु
दारिद्र्यदोषो महितेऽत्र देशे ॥

: ४० :

अस्याः सुतः सञ्जयनामकोऽपि
'प्रवर्तितो दीप इव प्रदीपात्' ।
हितं स्वदेशस्य लषन् स पञ्च-
सूत्रात्मकं कार्यमुवाच धीमान् ॥

: ४१ :

शिक्षा जनानां हृदये दधाति
ज्ञानाह्वयं ज्योतिरतिप्रदीप्तम् ।
तेनार्जनीया सततं प्रयत्न-
शतैरपीयं शुभमिच्छुभिर्द्राक् ॥

: ४२ :

जना इहाज्ञानतमोनिमग्नाः
शक्ता न किञ्चित्करणे जडाश्च ।
जाड्यस्य तेषामथवाऽप्यशक्तेः
शिक्षैव दूरीकरणे समर्था ॥

: ४३ :

सुदायदानं क्षतये महत्यै
प्रथा तथापीयमगान्महत्त्वम् ।
अस्याः कुटुम्बानि वशं गतानि
नैकान्ययुः सत्यमकिञ्चनत्वम् ॥

: ४४ :

वरः, पिता तस्य, तथेतरे तत्-
पक्षस्थिताः पुष्कलमर्थराशिम् ।
वस्तूनि चान्यानि महार्घकाणि
वाञ्छन्ति कन्यापितुरुद्ग्रहीतुम् ॥

: ४५ :

ददामि नो चेन्न भवेद्विवाहो
मत्कन्यकाया इति सम्प्रधार्य ।
ऋणं स गृह्णात्यधमर्णतां च
प्रयाति वर्षाणि बहूनि दीनः ॥

: ४६ :

एवं स्थितेऽपि प्रतिकूलदैवा-
न्न चेदसौ दातुमलं कथञ्चित् ।
आतृप्ति जामातृकुटुम्बकाय
तत्कन्यकाजीवितमेव न स्यात् ॥

: ४७ :

विद्धा वचोभिर्बहु यावदायु-
ररुन्तुदैः कष्टमियं प्रपन्ना ।
भस्त्रेव दीर्घं श्वसती कथञ्चित्
स्वजीवितं संक्षपयत्यभाग्या ॥

: ४८ :

सुदायमूला बहवो ह्यनर्था
जायन्त इत्थं भुवि दुर्निवाराः ।
अनर्थहेतुस्तत एष लोकैः
प्रहेय इत्यत्र न संशयोऽस्ति ॥

: ४९ :

ग्रस्तश्चिराच्चन्द्र इव ग्रहेण
देशोऽस्मदीयः खलु राहुणैषः ।
जात्यादिभेदाख्यमहाग्रहेण
विच्छायतां काञ्चन शोचनीयाम् ॥

: ५० :

स्वस्मिन् दधाति प्रतिभाति चापि
कीटानुविद्धो मणिरत्नहारः ।
दैवात्कुले जन्म न जातु तत् स्याद्
हेतुः प्रकर्षे न च वाऽपकर्षे ॥

: ५१ :

एतत्समस्तं सुविचारणीयं
विवेकमाधाय मनःसु सर्वैः ।
मोहस्त्वनल्पः परिलक्ष्यतेऽत्र
समाक्रमी हन्त ! बुधाबुधानाम् ॥

: ५२ :

वर्णत्रयं जन्मन एव बाढं
कस्मात्स्वदेशे कलयेत्स्वमुच्चम् ।
कस्मात्तुरीयः कलयेच्च वर्णः
स्वं दुःखितो जन्मत एव नीचम् ॥

: ५३ :

लोकेषु लोकेषु च भेद एष
दयालुना न प्रभुणा कृतोऽस्ति ।
जनैः कृतत्वात् सुतराममुष्य
तैरेव दूरीकरणं हि युक्तम् ॥

: ५४ :

भूमा तरूणां खलु यत्र भूमौ
प्रकाशते सैव मता प्रकृष्टा ।
न केवलं नेत्रसुखावहा सा
वृष्टेः प्रकामं जननेऽपि शक्ता ॥

: ५५ :

साधारणीयं भुवि धारणाऽस्ति
प्रत्यक्षसिद्धा दृढबद्धमूला ।
यत्र द्रुमाणां प्रचुरत्वमस्ति
तत्रैव वृष्टेरपि पुष्कलत्वम् ॥

: ५६ :

वृक्षा निरुन्धन्ति मरोः प्रसारं
सस्यक्षमां चापि वितन्वते क्ष्माम् ।
भवन्ति ते नेत्रसुखावहाश्च
जनैरतस्ते खलु रोपणीयाः ॥

: ५७ :

नितान्तमज्ञानतमोनिमग्ना
जना अनेकेऽत्र वसन्ति दीनाः ।
आहारनिद्राभयमैथुनानि
येषां समेषां पशुभिः समानि ॥

: ५८ :

दिने दिने स्वोदरपूरणाय
विडम्बनां ते महतीं सहन्ते ।
नैकैरथो व्याधिभिरात्तसत्त्वा
यथाकथञ्चिद् गमयन्ति कालम् ॥

: ५९ :

स्वस्यापि पर्याप्तमिमे न भोक्तुं
द्विरह्न आसादयितुं समर्थाः ।
तथाऽपि जाड्याज्जनयन्त्यपत्य-
जातं भृशं क्लेशविवृद्धिकारि ॥

: ६० :

नान्नाद्यवृद्धिर्भविता प्रकामं
नैकैरुपायैरपि तावतीह ।
असंयमाज्जाड्यवशात्तथा च
वृद्धिर्जनानामिह यावती स्यात् ॥

: ६१ :

यावज्जनाः संयममत्र नैव
　कल्याणहेतुं परिपालयन्ति ।
　　नैवोद्धृतिर्यत्नशतैरपि स्याद्
　　　देशस्य नो वागियमस्ति सत्या ॥

: ६२ :

अतो न वृद्धिं समुपैतु सङ्ख्या
　देशे जनानामिति मुख्यकृत्यम् ।
　　उद्योगजाते च कृषौ च जाते
　　　सम्यक् प्रकर्षेऽपि जनाभिवृद्धया ॥

: ६३ :

दरिद्रताऽपैष्यति नैव देशा-
　दस्माद् भृशं दुःखकरीति सत्यम् ।
　　अतो निरोधाय जनाभिवृद्धे-
　　　र्यत्नो जनैः कश्चिदिहास्थितोऽस्तु ॥

: ६४ :

अपत्ययुग्मं यदि कस्यचित्तत्-
　त्रयं भवेद्वा जनयेन्न सोऽन्यत् ।
　　स संयमं पालयति स्वयं चे-
　　　द्वरं ततोऽन्यन्नहि किञ्चिदस्ति ॥

: ६५ :

नो चेद् भवेत्तस्य बलात्स्वयं वा
शल्यक्रिया, येन भवेदशक्तः ।
जनः प्रजाया जनने यतश्च
जनाभिवृद्धिः खलु वारिता स्यात् ॥

: ६६ :

श्रीसञ्जयः सर्वमिदं विचार्य
कृत्स्नत्वमाधातुमिव स्वमातुः ।
कार्यक्रमे स्वं खलु पञ्चसूत्र-
कार्यक्रमं संयुयुजे विपश्चित् ॥

: ६७ :

गृहीतशिक्षाः खलु ये भवन्ति
प्रत्येकमेते विनयन्तु लोकम् ।
सुदायवर्जं च भवेद् विवाहो
जातिप्रथा चास्तमुपैतु (सद्यः) ॥

: ६८ :

प्रत्येकमेकैकमनोकहं द्राग्
जना मनोज्ञं खलु रोपयन्तु ।
जनाभिवृद्धेश्च भवेन्निरोध
इमानि कार्याणि भवन्ति पञ्च ॥

: ६९ :

स्फूर्तिं परामात्मनि बिभ्रदेष
श्रीसञ्जयो बुद्धिबलेन युक्तः ।
मार्गं नवीनं युवकान् प्रदर्श्य
नेतृत्वमेषां विदधाति सम्यक् ॥

: ७० :

सङ्कल्पशक्तिः सुदृढाऽस्य साधो-
र्दीर्घा च दृष्टिर्मतिवैभवं च ।
मातुर्गृहीता सुतरां स्पृहार्हा
गणा गुणानां कृतिना सुतेन ॥

: ७१ :

परिश्रमेणैवमयं सुदेशः
मातुश्च पुत्रस्य निरन्तरेण ।
कीर्तेश्च ऋद्धेश्च सुशर्मणश्च
पारं परं यास्यति शीघ्रमेव ॥

: ७२ :

उच्छृङ्खलत्वस्य निरोधकेन
देशेऽथ नोऽत्यन्तमपेक्षितेन ।
आपत्स्थितेर्लोकनियन्त्रकेण
ह्युद्घोषमात्रेण विलक्षणेन ॥

**श्रीसञ्जयगान्धी**

स्फूर्तिं परामात्मनि बिभ्रदेष
श्रीसञ्जयो बुद्धिबलेन युक्तः ।
मार्गं नवीनं युवकान् प्रदर्श्य
नेतृत्वमेषां विदधाति सम्यक् ॥

सङ्कल्पशक्तिः सुदृढाऽस्य साधो-
र्दीर्घा च दृष्टिर्मतिवैभवं च ।
मातुर्गृहीताः सुतरां स्पृहार्हा
गणा गुणानां कृतिना सुतेन ॥

२५.६९-७०.

: ७३ :

उपद्रवा एकपदे विलीना
आन्दोलनादीनि गतानि चास्तम् ।
सर्वत्र शान्तिः प्रसृता च देशे
जनस्य तद्विस्मयनीयमास ॥

: ७४ :

काले च कार्याधिकृताः स्वकार्या-
लयेषु गन्तुं खलु सम्प्रवृत्ताः ।
तथा च कालेन गतागते द्राग्
रेलादिकानामिह सम्प्रवृत्ते ॥

: ७५ :

सर्वत्र चालक्ष्यत निर्विशेषं
हिताय सर्वस्य हि संयमो द्राक् ।
माया किमेषा किमु वेन्द्रजालं
मतिर्जनानामिति सम्प्रवृत्ता ॥

: ७६ :

आन्दोलनादि प्रशमं यतोऽगात्
ततोऽभिवृद्धिं परमामुपागात् ।
उद्योगजाते चिरकाङ्क्षिता द्राग्
उत्पादनस्य क्षमताऽत्र देशे ॥

: ७७ :

उपेक्षिता ये सुतरामभूवन्
चिराय तेषां हितमाचरन्ती ।
कल्याणबुद्धिर्विबुधाग्रगण्या
दीनस्य मित्रं जयतीन्दिरात्र ॥

: ७८ :

पर्वाभवत्प्रागनुशासनं यद्
आपत्स्थितिः सम्प्रति भारते सा ।
समागते चाप्यनुशासने स्युः
सिद्धानि सर्वाणि न ईप्सितानि ॥

: ७९ :

येषां गृहं नास्ति कुटीरकं वा
तेभ्योऽतिदारिद्र्यवशं गतेभ्यः ।
राज्येन निर्माय गृहाणि दत्ता-
न्याशु स्वयं सप्ततिलक्षकाणि ॥

: ८० :

बह्वी वितीर्णाऽपि च तेषु भूमि-
रुदञ्चनं चापि ऋणस्य यातम् ।
ये चाप्यभूवन् श्रमिणोऽत्र बद्धा-
स्ते चापि सर्वे गमिता विमुक्तिम् ॥

: ८१ :

वस्तूनि हीनैरथ वस्तुभिर्ये
मिश्राण्यकुर्वन् करचोरिकां च ।
देशान्तरात्तस्करवृत्तिमाप्ताः
पण्यादि देशं निजमानयंश्च ॥

: ८२ :

समाचरन्स्वार्थपरीतचित्ता
ये सञ्चयं हन्त ! महार्घतायै ।
पदार्थजातस्य समेऽपि तेऽद्य
रुद्धाश्च दण्डं गमिताश्च घोरम् ॥

: ८३ :

एतत्तदन्यच्च चकार कार्यं
लोकप्रिया लोकहिताय कर्म ।
प्रशासिकानां धुरि कीर्तनीया
देवीन्दिरा दिव्यगुणैरुपेता ॥

: ८४ :

श्रमः कठोरश्च सुदीर्घदृष्टिः
सङ्कल्पशक्तिः सुदृढा तथा च ।
एतत्समस्तं खलु संयमेन
सत्रा महाव्याहृतयश्चतस्रः ॥

: ८५ :

देशोऽस्मदीयः सुतरां प्रकृष्टः
स्वर्गापवर्गस्य निमित्तभूतः ।
अस्मादशिक्षन्त पुरा मनोज्ञात्
स्वं स्वं चरित्रं भुवि सर्वलोकाः ॥

: ८६ :

कष्टां दशां कालवशात्प्रपन्नो
दारिद्र्यकोटिं परमामुपेतः ।
भूयोऽप्ययं पूर्ववदेव देशो
भविष्यतीत्यत्र न काऽपि शङ्का ॥

: ८७ :

(मन्दाक्रान्तावृत्तम्)

देशोऽयं मे पुनरपि भवेत्पूर्ववद्वैभवस्य
पूर्णो लोका इह च सुतरामाप्तकामा भवेयुः ।
कीर्तिर्दिव्या दिशि दिशि भवेदस्य हृद्या च कामं
स्वप्ना एते मनसि नितरामुन्मिषन्तीन्दिरायाः ॥

: ८८ :

साक्षात्कर्तुं प्रतिदिनमियं यत्नमासेवमाना
तान् प्राप्नोति क्षणमपि बुधा न क्षणं जातु साध्वी ।
तच्चिन्तैवामथति सुतरां मानसं मानवत्या
देशे मानं परमुपगते मानवा मानभाजः ॥

चिन्तनमुद्रायां श्रीमती इन्दिरागान्धी

देशोऽयं मे पुनरपि भवेत्पूर्ववद्वैभवस्य
पूर्णो लोका इह च सुतरामाप्तकामा भवेयुः ।
कीर्तिर्दिव्या दिशि दिशि भवेदस्य हृद्या च कामं
स्वप्ना एते मनसि नितरामुन्मिषन्तीन्दिरायाः ॥

२५.८७.

: ८९ :

(शिखरिणीवृत्तम्)

भवन्त्वेते स्वप्नाः सपदि फलवन्तोऽतिरुचिराः
फलेद्भूमिः सस्यं प्रचुरमिह खनिजं पुष्कलमथो ।
समे लोकाश्चात्र प्रविकसितचित्ताः स्वसमयं
सुखानां सम्पूर्णाः स्वभुवि गमयन्तु प्रमुदिताः ॥

: ९० :

(इन्दिरावृत्तम्)

काव्यमेतदिन्दिरेति-
वृत्तबोधकं बुधाः ।
एति साम्प्रतं समाप्ति-
मीश्वरानुकम्पया ॥

॥ इति डा० सत्यव्रतशास्त्रिविरचिते
इन्दिरागान्धीचरितमहाकाव्ये
पञ्चविंशः सर्गः ॥

समाप्तं चेदं महाकाव्यम् ।
शुभं भूयादध्यायकानामध्यापकानां च ॥

# पूर्वपीठिका

१. निश्चय ही, अनेक प्रकार के सुन्दर विचारों की लहरों पर उछलता कूदता जिस का मानस-राजहंस सुशोभित हो रहा है, एवञ्च जो अलौकिक बुद्धि वाली अपने विचारों के द्वारा बृहस्पति को भी पूर्ण रूप से नीचा दिखाती है।

२. जो जनता की नेता, हृदयों को जीतने वाली, अदम्य शत्रुओं का भेदन करने वाली, सौम्य आकृति वाली है। सौम्य गुणों के द्वारा उस तक पहुँचा जा सकता है। "जहाँ सुन्दर आकृति हो वहीं गुणों का वास होता है।"

३. जिस की यह उत्कृष्ट इच्छा है कि मेरा देश परम समृद्ध हो, कोई भी दीन या दरिद्र न रहे और न ही कोई रोगग्रस्त या पीड़ित हो।

४. इस देश में सब मिलकर सुख से रहें, मीठा बोलें और मधुर व्यवहार करें, लड़ाई झगड़ा न हो और भारत नन्दन के समान हो जाय।

५. निरन्तर इस प्रकार के चिन्तन में मग्न और जनता के द्वारा उत्कण्ठा के साथ देखी जाती हुई, अपने समस्त देश को अभेद रूपी एक सूत्र में बांध कर जो सुतरां शोभायमान हो रही है।

६. सकल जगत् में जिस की कमनीय कीर्ति का संकीर्तन हो रहा है, जिसका कमनीय रूप अपने गुणों की आभा से सुशोभित हो रहा है, सूर्य की तरह अपने उग्र प्रताप को धारण करने वाली वह इन्दिरा प्रत्येक दिशा में अपनी ख्याति का विस्तार करे।

७. विशुद्ध बुद्धि वाली, लोकप्रिया, दिशाओं में प्रसृत कीर्तिकथाओं वाली, विदुषी इन्दिरा के हृदयहारी शुभ चरित का मैं संस्कृत भाषा में बखान करने चला हूं।

८. नतमस्तक होकर मैं नीलकमल के समान गुणों वाली, भारत देश के प्रधानमन्त्री पद पर शोभायमान श्रीमती इन्दिरा को पद्यरूपी नील-कमलों की इस माला को समर्पित करता हूँ।

# पहला सर्ग

९. स्वर्ग और अपवर्ग का निमित्तभूत, पृथिवी पर प्रसिद्ध प्रयाग नाम का एक तीर्थ है जिस पर पवित्रात्मा, जितेन्द्रिय, शुभ आचार और विचार युक्त सज्जनों का निवास है।

१०. जिस के माहात्म्य से विमुग्ध हो, सब ओर से आने वाले लोग कलि के विकार से उत्पन्न होने वाले पाप को धोकर प्रसन्नचित्त हो अपने घरों को लौटते हैं।

११. जहाँ नदियों के सङ्गम के कारण सार्थक नाम वाला सङ्गम नामक प्रिय और विलक्षण जलसमूह आँखों के लिए मनोहारी दृश्य उत्पन्न करता हुआ सुशोभित हो रहा है।

१२. जहाँ गंगा और यमुना का जल स्पष्ट रूप से अलग अलग इस प्रकार शोभायमान हो रहा है जिस प्रकार घनी श्याम वन-स्थलियों में प्रविष्ट चन्द्रमा की शुभ्र किरणें।

१३. जिस तीर्थ के सौन्दर्य ने कविताविलास कालिदास को आकर्षित किया था और जिसका वर्णन उसने रघुवंश नामक अपने काव्य में चार श्लोकों में किया था।

१४. पवित्र, हृदयहारी और शीतल जिस के परम पावन जल स्नान और आचमन (आदि) के द्वारा लोक को कृतकृत्य कर देते हैं।

१५. उसी श्रेष्ठ तीर्थराज को काश्मीरदेशोत्पन्न, सुशिक्षित, उदार श्री मोती-लाल नाम से प्रसिद्ध (एक व्यक्ति) ने अपना निवास स्थान बनाया।

१६. कुशाग्रबुद्धि और परिश्रम के द्वारा कानून का अध्ययन कर कार्यविदों में श्रेष्ठ वह न्यायालय में वकील के रूप में सुशोभित हुआ।

१७. अत्यल्प समय में ही उसका अत्यन्त शुभ्र यश पृथिवी पर फैल गया। इसलिये श्री (=लक्ष्मी) ने उसे श्री (=शोभा तथा वैभव) से युक्त कर दिया, (क्योंकि) होनहारों के प्रति पक्षपात होता ही है।

१८. समय पाकर अत्यधिक समृद्धि को प्राप्त कर उसने एक सुन्दर घर लेने का विचार किया। इस इच्छा से प्रेरित होकर उस ने एक अंग्रेज का घर उसके साथ लगी भूमि के साथ खरीदा।

१९. वह घर उसे अच्छा न लगा। इसलिये उस मनीषि-श्रेष्ठ ने एक मनोहर नवीन गृह ही (उसके स्थान पर) बनवा लिया।

२०. (वह घर) नये रंगबिरंगे परदों और कालीनों से और नये सोफासेटों से सुसज्जित किया गया, और नई सुन्दर कुरसियों और नूतन फर्नीचर के द्वारा शोभायमान हुआ।

२१. विस्तृत शोभायुक्त, सुन्दर पुष्पों से लदे उद्यान से सुशोभित श्री मोतीलाल के अद्वितीय घर को देख हर व्यक्ति दांतों तले उँगली दबाता था।

२२. उत्तम वैभव से परिपूर्ण इस (घर) में वास करने से हमें भली प्रकार आनन्द की प्राप्ति हो—यह सोच कर ही उस मोतीलाल ने उस आनन्द-भवन का निर्माण कराया था।

२३. पत्नी और पुत्र, दो सुन्दर कन्याओं तथा अनेक गुणी एवम् आज्ञाकारी सेवकों के साथ वह चतुर मोतीलाल उस भवन में जा कर रहने लगा।

२४. विचित्र प्रतिभा वाले अपने पुत्र का उसने 'जवाहर' यह मनोहर नाम रखा। और इसी प्रकार दोनों पुत्रियों के भी कृष्णा और लक्ष्मी ये नाम रखे।

२५. लक्ष्मी का नाम जब विजया पद से युक्त हुआ तो और अधिक पूर्णता को प्राप्त हो गया। इस प्रकार परिवार के साथ सुखपूर्वक श्री मोतीलाल अपना समय बिताने लगा।

# दूसरा सर्ग

१. श्रीमोतीलाल का बहुत समय से मुबारिक अली नाम का एक मुंशी था। अत्यन्त आज्ञाकारी और भक्ति से परिपूर्ण चित्त वाले उसने अपने प्रिय (स्वामी) की तन मन से सेवा की थी।

२-३. अपने प्रिय भक्त को जब बुढ़ापे ने आ घेरा, उस का शरीर जर्जरित हो गया, कैंसर आदि अनेक रोगों से वह ग्रस्त हो गया, असहाय दयनीय और कृश उसकी स्थिति हो गई तो दयार्द्र चित्त, उदार श्रीमोतीलाल उसे अपने घर में ही ले आया। और वहीं एक ओर एक कुटीर में उसके रहने का प्रबन्ध करा दिया।

४. मुबारक अली प्रायः चिन्तित रहा करता था। उसकी यह इच्छा थी कि मेरी मृत्यु जवाहरलाल की सन्तान का मुखकमल देखने के पश्चात् ही हो, पहले नहीं।

५. इसलिये उत्पन्न होते ही यह कन्या श्री मोतीलाल की आज्ञा से धाय के द्वारा तुरन्त उसके पास लाई गई। (उसे) यह बताया गया कि यह जवाहरलाल की सन्तान है।

६. मन्दद्दृष्टि और व्याकुलता के कारण वह वृद्ध इस पुत्री को पुत्र समझ बैठा और प्रसन्नचित्त होकर श्रीमोतीलाल से कहने लगा—'मुबारक हो भाई साहब'।

७. उसके पश्चात् उसने नवजात शिशु की दीर्घ आयु की कामना से परमात्मा से प्रार्थना की। हर्षातिरेक से भरे चित्त से वह श्रीमोतीलाल से फिर बोला।

८-९. 'जिस प्रकार जवाहर तेरा उत्तम पुत्र है, उसका यह पुत्र भी वैसा ही हो'। इस प्रकार अपनी बात कह कर खुशी के आंसुओं से भीगे मुख से शोभायमान वह वृद्ध मूर्च्छित हो गया। इसके अतिरिक्त उसकी और कोई आकांक्षा न थी। दो अथवा तीन दिन में बिना होश में आये वह दिवंगत हो गया।

१०. दादी पोती का अपने मन में सोचा हुआ इन्दिरा नाम रखना चाहती थी। परन्तु पिता उसका प्रियदर्शिनी यह दूसरा नाम रखना चाहता था।

११. उन दोनों का इस विषय में, (परिवार के) सब लोगों के दुःख का मूल, परस्पर विवाद उत्पन्न हो गया। स्वरूपरानी और जवाहर जो एक बार ठान लें वह अन्यथा नहीं हो सकता था।

१२. इस प्रकार की विचित्र स्थिति पर विचार कर मनसे विवाद को शान्त करने की इच्छा से अनोखी बुद्धि से युक्त इस (इन्दिरा) की माता ने, उन दोनों से यह मनोहर बात कही—

१३. इस कन्या के ये दोनों ही नाम रख दिये जायें। मुझे ये दोनों नाम बहुत उचित प्रतीत होते हैं। इस लिये यह अद्वितीय रूप वाली कन्या लोक में दोनों नामों से जानी जाये।

१४. इस प्रकार उस की बात को सुनकर उसकी दादी और पिता दोनों ही चिन्तामुक्त और प्रसन्न-चित्त हो गये और उस के कौशल की प्रशंसा करने लगे।

१५. इस प्रकार विवाद शान्त कर दिये जाने पर लक्ष्मी के स्वरूप वाली होने से वह इन्दिरा नाम से और छरहरे शरीर वाली प्रियदर्शना होने के कारण प्रियदर्शिनी नाम से प्रसिद्ध हुई।

१६. न केवल मुबारक अली के प्रगाढ और अन्तस्तल से उठे हुये आशीर्वचनों ने ही उसे स्वीकार किया, अपितु नक्षत्रयोग से प्रकट हुई प्रभुकृपा ने भी उसे गले लगाया।

१७. नीलकमल के समान आंखों वाली, पतले छरहरे शरीर वाली, शुभ-लोचना वह सुन्दरतर होकर शोभा पा रही थी। उसने अपने माता, पिता और दादा से सुन्दर रूप ग्रहण किया था।

१८. उस के जन्म के कारण श्रीमोतीलाल के विशाल घर में हर्ष समाये न समा रहा था। इसलिये उस घर में और उसके (श्री मोतीलाल के) बन्धु वर्ग में अनुपम उत्सव प्रारम्भ हो गया।

१९. पोती के अत्यन्त भोले भाले मुँह को देख कर श्री मोतीलाल ने परम कृतार्थ होकर अपने बन्धुजनों को सैंकड़ों मनोवाञ्छित उपहार दिये।

२०. इस प्रकार इस घर में रोचक और अभूतपूर्व उत्सव वहुत दिनों तक चलता रहा और आश्चर्यचकित लोगों को जितना चाहे उतना खाने और पीने को मिला ।

२१. वन्धुजनों का अनन्त समूह सव ओर से आया और प्रसन्न होकर उसने श्री मोतीलाल को वधाईयां और शुभ कामनायें भेंट कीं ।

२२. यद्यपि उस उत्सव में सभी लोग प्रसन्नचित्त थे और वहुत सुख का अनुभव कर रहे थे, परन्तु पोते का मुँह देखने की अभिलाषा वाली एक मात्र दादी कुछ अनमनी थी ।

२३. उसे श्री मोतीलाल ने भली प्रकार विचारी हुई और उत्साहवर्द्धक यह वात कही—'हे शुभे तू मन में इस प्रकार दुखी मत हो । यह पुत्री तो सैकड़ों पुत्रों से भी वढ़ कर है' ।

२४. 'सचमुच ही यह वह काम करेगी, जो पहले किसी अन्य व्यक्ति ने नहीं किया ।' इस प्रकार पति की अर्थयुक्त वाणी को सुनकर उसने अपने मन की व्यथा को त्याग दिया ।

२५. इस प्रकार शोक को त्याग कर और प्रसन्न होकर उस मनस्विनी ने उस कन्या पर तुरन्त स्नेह की धारा वहा दी । और श्रीमोतीलाल की भी चहेती वह कन्या सुखों से घिरी हुई वढ़ने लगी ।

# तीसरा सर्ग

१. उस के भोले भाले और मनोहर मुख को देख कर मोतीलाल मन में बहुत प्रसन्न होते। (उन्हें ऐसा लगता जैसे) किसी अप्राप्य वस्तु की प्राप्ति हो गई हो। उन का सुख तब इसी रूप में प्रकट हुआ।

२. दुबली पतली, खिले कमल के समान नेत्रों वाली वह इन्दिरा काञ्चन-वर्ण शरीर को धारण करती हुई अपने समस्त बन्धुवर्ग के हृदय में अविलम्ब स्नेह संवलित उत्तम प्रहर्ष की वर्षा करने लगी।

३-४. शरत्काल के चन्द्रमा की कला के समान सुन्दर वह कन्या अपनी कान्ति से हर्ष की वृद्धि करती हुई बढ़ने लगी। दादी उसे अनेक प्रकार की उत्तम कहानियां सुनाती और प्रसन्न होकर निरन्तर भक्ति रस से भरे, कानों को तृप्त करने वाले अनेक गीत जी भर कर गाती थी। पिता ने भी अपनी इस पुत्री को प्रसन्न होकर अनेक पुस्तकें दीं।

५. इसी प्रकार मोतीलाल ने भी अपनी पौत्री को भाँति भाँति की गुड़ियाँ दीं, जिन से घंटों खेलती हुई वह परम हर्ष का अनुभव करती थी।

६. मोतीलाल से उसने मन की उदारता और उच्च एवं परिष्कृत रुचि ग्रहण की और पिता से स्वाध्यायशीलता और सदा (=हर स्थिति में) अदम्य साहस प्राप्त किया।

७. स्नेहमयी दादी ने उसे अपने साहित्य में भक्ति और दृढ़ आस्था और मां ने उसे प्राचीन संस्कृति में प्रेम रस और सुकुमारता प्रदान की।

८. अपने बन्धुजनों में उसे जो जो अच्छा लगा उसने उनसे वह वह ग्रहण कर लिया। समय का प्रभाव भी कुछ कम नहीं होता। उसने समय से ही सब से अधिक ग्रहण किया।

९. जिस समय इस कन्या ने सुरम्य भारत देश में जन्म लिया उस समय यहाँ विदेशी राज्य था। इसलिये सभी चिन्तानिमग्न थे। भला पराधीनता में कौन सुखी हो सकता है।

१०. यह देश कैसे स्वतन्त्र हो सकता है और यहां अपना राज्य कैसे स्थापित हो सकता है, देश-भक्त लोग दुःखी एवम् उद्विग्न चित्त से अपने दिन जैसे तैसे काट रहे थे।

११. इस देश में गान्धी नाम के एक मनस्वी थे जो महात्मा नाम से प्रसिद्ध हो गये थे। उस महापुरुष ने प्यारी मातृभूमि को स्वतन्त्र कराने के लिए भगीरथ प्रयत्न किया।

१२. वह भारतवासियों को इस प्रकार सम्बोधित करते थे—ये हमारे शासक विदेश से आए हुए हैं। आप लोगों को इन्हें अवश्य बाहर कर देना चाहिये ताकि हमारा देश स्वतन्त्र हो सके।

१३. उस की सारगर्भित वात को सुनकर लाखों करोड़ों देशभक्त लोग उस का इस प्रकार अनुसरण करने लगे जिस प्रकार नदियों का जल समुद्र के जल का अनुसरण करता है।

१४. वकील के रूप में महान् वैभव को प्राप्त करने वाले परन्तु फिर भी अपने देश के प्रति प्रेमभावना रखने वाले मतिमान् लोकमान्य मोती-लाल ने भी उसी का अनुगमन करने का निश्चय किया।

१५. विलायत में शिक्षा पाने वाले जवाहर नामक उसके बुद्धिमान् पुत्र ने भी स्वदेश की स्वतन्त्रता के लिये प्रेरित होकर उसका अनुकरण करने का पक्का इरादा कर लिया।

१६. नाना दिशाओं से लोग उन दोनों को मिलने की इच्छा से उनके प्रसिद्ध निवासस्थान पर आते और पिता और पुत्र दोनों से उनकी घंटों वातें होती रहतीं।

१७. वातचीत प्रारम्भ होने पर अपनी पौत्री से वहुत अधिक प्यार करने वाले मोतीलाल लाड करते हुये उसे वहुत समय तक अपनी गोद में विठाये रखते। किञ्च वहाँ बैठ कर उसे भी परम शान्ति मिलती थी।

१८-१९. वचपन से ही समझदार होने पर भी बातचीत उसकी समझ में न आती। परन्तु कुछ शब्द उसने ग्रहण कर लिये थे। क्रान्ति, सत्याग्रह आदि अनेक शब्दों से वाल्यकाल में ही उसका परिचय हो गया था। धीरे धीरे इनका अर्थ भी उसे स्पष्ट होने लगा। विद्वज्जनों का यह शोभन विचार है कि अवस्था के साथ ज्ञान भी बढ़ता है।

२०. मैं देशकार्य में कैसे लगूं—वह कन्या घंटों खड़ी यही सोचती रहती। उस समय इस के मन में अपने देश की स्वतन्त्रता की इच्छा भली प्रकार जागृत हो चुकी थी।

२१. घर में कोई अन्य बालक न था, इसलिये इसे किसी का साहचर्य न मिल सका। वह घंटों अकेली अपने खिलौनों के साथ किसी प्रकार समय बिताती थी।

२२. कभी पिता के पुस्तकालय में बैठ कर रोचक पुस्तकें पढ़ती। उनमें से कुछ ऐसी थीं जिनके साथ इसका विशेष लगाव हो गया।

२३. ऐसी पुस्तकों में से एक वह थी जिस ने इस के मन में विशेष रुचि उत्पन्न की। उसमें जो कथा वर्णित थी उसे वार वार पढ़ कर इसे बहुत तृप्ति मिलती थी।

२४. पहले की बात है कि जोन आफ़ आर्क नाम की एक अद्भुत, भाग्यवती प्रसिद्ध कन्या हुई, जिसने अपने देश फ्रांस को स्वतन्त्र कराने के लिये अपने आप को धधकती ज्वाला में होम कर दिया।

२५. एक समय की बात है कि भोली भाली उस ग्रामीण कन्या ने अपने राष्ट्र की मुक्ति के लिये आकाश से उसे प्रेरणा देने वाली बातें सुनीं।

# चौथा सर्ग

१. घोड़े पर सवार होकर और कवच पहन कर यह नेतृत्व करती हुई लोगों को ऊँचे स्वर में सम्बोधित करती थी ।

२. —हमारा देश फ्रांस आज अंग्रेजों से आक्रान्त है । मुझे इस की मुक्ति के लिये ईश्वर का सन्देश मिला है ।

३. पहले तो लोग हँस देते और इस की बात का विश्वास न करते, पर कुछ समय के पश्चात् लोगों का इस पर अटल विश्वास हो गया ।

४. उस कन्या के नेतृत्व में उन सब फ्रांसवासियों ने अंग्रेजों को बाहर निकाल कर अपने प्यारे देश को स्वतन्त्र करा लिया ।

५. परन्तु आह! वह वीरकन्या शत्रुओं के हाथ पड़ गई और उन्होंने उसे फांसी पर चढ़ा कर उसके नीचे आग जला दी ।

६. जहाँ अपने कार्य में सफल दीप्तवदना वह साहसी कन्या जल कर राख हो गई और स्वर्ग सिधार गई ।

७. जोन आफ़ आर्क नाम की कन्या ने जो अद्भुत कार्य किया, क्या उसे करने में मैं असमर्थ हूं ? अपना देश मुझे भी तो प्यारा है ।

८. इस प्रकार वह कन्या प्रियदर्शिनी अनेक प्रकार से सोचा करती थी । उम्र की तुलना में उसका बुद्धिवैभव कहीं बढ़ चढ़ कर था ।

९-१०. एक बार धाय ने देखा कि वह सुन्दर कन्या (इन्दिरा) दोनों आँखों को बन्द किये एक खम्भे से दोनों भुजाओं से लिपटी वीरकन्या जोन आफ़ आर्क का अनुसरण करती हुई फांसी पर चढ़ने की मुद्रा में चुपचाप खड़ी है ।

११. उस के मुख का प्रकाशमान वर्ण भली भांति परिलक्षित हो रहा था और वह ऐसा अनुभव कर रही थी मानों अग्नि की ज्वालाएँ उसके चरणयुगल में प्रवेश कर रही हों ।

१२. धाय के द्वारा इस स्थिति में देखी गई वह कन्या बहुत शरमाई परन्तु प्यारी धाय ने उस की वह चेष्टा किसी को नहीं बताई ।

१३. जैसे जैसे समय बीतता गया वैसे वैसे ही भारत के लोग दृढ़ आस्था से स्वतन्त्रता के लिये प्रयत्न करने लगे।

१४. उन्होंने देश भर में बहुत आन्दोलन आदि किये और अनेक प्रदर्शनों का आयोजन भी किया।

१५. शासकों की आज्ञा की अवहेलना कर सैंकड़ों और हजारों की संख्या में सत्याग्रहियों ने अपना रोष व्यक्त किया।

१६. विदेशी शासन ने विद्रोह को शान्त करने के लिये उन सत्याग्रहियों को पशुओं की तरह पीटा।

१७. लाल टोपियों वाले (पुलिस के) जो आज्ञाकारी (सिपाही) वहां चौकसी के लिये रखे हुये थे उन नरपिशाचों ने उन्हें डंडों और गोलियों से मारा।

१८. आनन्द भवन से गये हुये अनेक सत्याग्रही, यहां तक कि बच्चे, भी अनेक बार सिपाहियों द्वारा पीटे गये।

१९. यह सब देख इस बालिका को बहुत क्रोध आया। 'वाह री इनकी दुष्टता'—इस प्रकार उस को बहुत कष्ट का अनुभव हुआ।

२०. उसका यह कष्ट उस के खेल में भली प्रकार परिलक्षित होता था। अहा ! बच्चों के मन की भावनायें (खेल में) अनायास ही व्यक्त हो जाती हैं।

२१-२३. उस के खिलौनों में कुछ पुतले टीन के बने हुये थे। उनमें से कुछ सत्याग्रहियों की आकृति के थे और कुछ सिपाहियों की तरह तरह की आकृति के। यह बुद्धिमती बालिका उनमें से सत्याग्रहियों की आकृति वालों को एक ओर खड़ा कर देती और सिपाहियों की आकृति वालों को दूसरी ओर। इस प्रकार उसका खेल चलता। तत्पश्चात् उन दोनों का वह घमासान युद्ध कराती।

२४. टीन के टकराव से शोर वाले घमासान युद्ध में सिपाहियों की आकृति वाले सब पुतले पराजित होकर पृथ्वी पर गिर पड़ते।

२५. उनमें सत्याग्रहियों की सुन्दर आकृतियों वाले पुतले अपने हाथों में अनेक तिरंगे ध्वज उठाये हुये शोभा पाते रहते थे।

२६. 'भारत माता की जय हो', 'हिन्दू-मुस्लिम एकता जिन्दावाद', 'महात्मा गांधी की जय हो' इस प्रकार वह ऊंचे स्वर से जयघोष करती।

२७. सत्याग्रही पुतलों की इस विजय को देख वह ज़ोर से हर्ष-ध्वनि करती और तालियां बजाती।

२८. इस प्रकार इस समझदार कन्या के खेल में भी युगधर्म के प्रभाव से स्वातन्त्र्य संघर्ष परिलक्षित होता था।

२९. बच्ची होते हुए भी परिपक्व बुद्धि वैभव युक्त वह कन्या इस प्रकार अत्यन्त रोचक, राष्ट्र-प्रेम के परिचायक, अपने विलक्षण खेलों में लगी हुई सुखपूर्वक समय बिताती थी।

# पाँचवाँ सर्ग

१. जब इस कन्या का शुभ जन्म हुआ तो अनेक घटनायें घटीं। इनमें घटनापटु विधाता की विविध चेष्टा ही दीखती है।

२. निश्चय ही उस समय अद्वितीय और भयङ्कर विश्वयुद्ध शान्त हुआ, और रूस नामक महान् भूभाग में तुमुल क्रान्ति हुई।

३. इन दो घटनाओं से प्रभावित, विश्व भर में प्रसिद्ध, उसके विद्वान् पिता ने अपने प्यारे महान् देश में अनेक वार भ्रमण किया।

४. अपने चारों ओर (लोगों की) आंखों के लिए रसायनभूत अपने तेज के परिवेष को धारण करते हुये उसने अपनी आंखों से वह सब कुछ देखा जो उस समय अपने देश में हो रहा था।

५. दुष्ट अंग्रेज शासक उस समय अपने देशवासियों को पशुओं की तरह मार रहे थे। इस कारण क्रोध से उसका हृदय फट सा गया।

६. उस मतिमान् को क्रोध आया और उसका प्रतिकार सोचते हुये उसने क्षण भर के लिये भी चैन न लिया। उसकी स्थिति बन्धन में पड़े सांप की तरह थी।

७. उसने अपने मन में प्रतिरोध का निश्चय किया। वह उसका अभीष्ट था। भला जनता का अप्रिय करने बाला शासन पृथिवी पर कैसे सह्य हो सकता है।

८. कहा जाता है कि उसी समय मनोविदारक, दारुण एक घटना घटी। जलियांवाला नामक स्थान में (अनेक) भारतीय गोलियों से भून दिये गये।

९. अत्यन्त दुःखद उस नरसंहार का समाचार पा कर जनता के महान् नेता जवाहर ने अपने मन में आग के सुलगने का सा अनुभव किया।

१०. हर रोज़ वह प्रिय विद्वान् नेता अपने लोगों से कहता—'अरे यह शासन आततायी है। आप इस कठोर शासन को कैसे सहन कर रहे हैं?'

११. 'अपनी मातृभूमि के तिरस्कार से आप लोगों का मन टुकड़े टुकड़े क्यों नहीं हो जाता ? मातृभूमि को माता माना जाता है। उसके अपमान को सहन नहीं किया जा सकता'।

१२. इस प्रकार उस की गम्भीर वाणी को सज्जनों ने अनेक बार अपने कानों से सुना और दृढ़ निश्चय वाले मन से उसका अनुगमन करने की इच्छा की।

१३. इसलिये वह जहां कहीं गया लोगों की भीड़ ने उस का पीछा किया उसी तरह जिस तरह कि दसों दिशाओं में फैली जलधाराएँ नदी के जल का अनुगमन करती हैं।

१४. महान् गौरव के वहाने अति शुभ्र यश को मुखमण्डल पर धारण किये उस बुद्धिमान् ने अपने लोगों के हृदय को विशेष रूप से अनोखा आनन्द प्रदान किया।

१५. उसके चहुं ओर स्थित पराकाष्ठा को प्राप्त तेजःपुञ्ज तेज़ धूप वाले सूर्य की तरह अधिकारी गण को असह्य प्रतीत होने लगा।

१६. उसकी वातों को हृदय से स्वीकार कर सैंकड़ों और हजारों लोगों ने इकट्ठे होकर देशभक्तिपूर्वक विदेशियों का विरोध किया।

१७. वे प्रतिदिन सभायें करते और उनमें अंग्रेजों की निन्दा करते थे। अप्रिय लगने वाली वातें बहुत ऊँची आवाज में कहते थे।

१८. वे दृढनिश्चयी प्रतिदिन छोटी छोटी टोलियां बनाकर बाजारों में जाते और अनेक प्रकार से दुकानदारों को विदेशी माल बेचने से रोकते।

१९. यदि आप हमारी उचित बात नहीं मानेंगे तो हम यहाँ खड़े रहेंगे। इस दृढ़ बात को कह वे वहां से किसी भी तरह हटते नहीं थे।

२०. उन्होंने केवल यही विलक्षण कार्य नहीं किया अपितु स्थिर बुद्धि के साथ और भी अनेक वहुर्चचित कार्य किये।

२१. वे मज़बूत और नये विदेशी कपड़ों को अग्नि के अर्पण कर देते थे। क्षण में ही आग धधक उठती और उन्हें भस्म कर देती थी।

२२. इस प्रकार के अपने देशवासियों के कार्यकलापों में परिवारसहित वह आगे आगे था। जनता का महान् नेता जवाहर अपने हृदय में एक विलक्षण स्फूर्ति लिये हुये था।

२३. कमला नाम वाली उसकी धर्मपत्नी ठीक उसी के पदचिह्नों पर चल रही थी। दुबली पतली होते हुए भी उस दृढनिश्चयिनी ने अनेक कष्ट सहे।

२४. माता ने भी, जो बहुत बूढ़ी हो चुकी थी पर फिर भी दृढ़ निश्चय वाली थी, उसी के मार्ग को अपनाया। उसी प्रकार दोनों बहिनें भी भाई का अनुकरण करती हुईं शोभायमान हुईं।

२५. इस प्रकार नेहरू परिवार के लोगों ने तन, धन और समय देश के अर्पण कर दिया। (सच है) महापुरुषों का अपना कुछ भी नहीं होता।

# छठा सर्ग

१. जब विदेशियों ने देखा कि भारतवासियों का क्रोध बहुत बढ़ा हुआ है और उनका मनोबल बहुत ऊँचा है तो पाँव के तले चोट खाये सांप की तरह उनका मन बहुत खिन्न हुआ ।

२. हमें इनसे कैसे छुटकारा मिले और इन्हें कैसे रोका जाय इस प्रकार की चिन्ताओं से व्याकुल होकर उनका समय बीतने लगा ।

३-४. शङ्काओं में डूबे हुए बहुत सोच विचार करने के पश्चात् वे निर्दयी इस निश्चय पर पहुँचे कि यदि नेताओं को इनसे अलग कर दिया जाय तो हमारे अभीष्ट की सिद्धि हो सकती है। अपने नेताओं के बिना ये ग्वाले से रहित गाय बैलों की तरह हो जायेंगे । यह निश्चय कर उन्होंने इनके बड़े नेताओं को कारागार में डाल दिया ।

५. श्रीमोतीलाल और जवाहरलाल दोनों ही जनता के महान् नेता थे । इस लिये इन दोनों मान्य लोकप्रिय नेताओं को वे जेल में ले गये ।

६. आनन्दभवन नाम से पृथिवी पर जो अनोखा भवन शोभायमान था वह सचमुच आनन्दहीन, कान्तिरहित और सूना हो गया ।

७. कान्तियुक्त चन्द्रमा के अस्त हो जाने पर अथवा प्रकाशमान सूर्य के दूसरे लोक में चले जाने पर आकाश की जो दशा हो जाती है। वही दशा हाय ! उस समय उस भवन की हो गई ।

८. उस समय श्रीमोतीलाल का वह सुन्दर अट्टहास कानों में सुनाई न पड़ता था और न ही भव्यमूर्ति, चिन्तनशील जवाहर वहाँ दिखाई पड़ते थे ।

९. न वहाँ लोगों की वह भीड़ इकट्ठी होती और न ही नई नई चर्चायें वहाँ चलती थीं। स्त्री-जन मात्र को शरण देने वाला वह भवन उस समय सूने जनस्थान (नामक जंगल) के समान दिखाई पड़ता था ।

१०. दोनों वीरों के जेल चले जाने और हृदय के व्याकुल होने पर

भी अपने देश की रक्षा के लिए दृढ़ निश्चय वाली महिलाओं ने वहाँ अपना धैर्य नहीं छोड़ा।

११. विपत्तियों में डूबे और संकटों में पड़े होने पर भी मनस्वि-जनों की उन्नत-धैर्य-सम्पन्न तथा चट्टान सदृश दृढ़तायुक्त स्त्रियाँ कभी भी साधारण जन की तरह व्यवहार नहीं करतीं ।

१२. इसलिए अपने दोनों बन्धुओं के कारागार में चले जाने पर भी वे स्त्रियाँ उन्हीं गति-विधियों में जुट गईं। इसके अतिरिक्त उन्हें अन्य कुछ भी करना अभीष्ट नहीं था।

१३. प्रतिदिन वे बाज़ार में जाकर व्यापारियों को विदेशी माल के क्रय-विक्रय से रोकतीं और अनेक सभायें और गोष्ठियां करतीं।

१४-१५ इन (सभाओं और गोष्ठियों) में वे देश की स्वतन्त्रता के विषय पर धुआंधार भाषण करती थीं। विदेशी शिक्षा के बाईकाट की कामना से वे अनेक विद्यालयों में भी जाती थीं। दृढ़ आस्था से उनके दरवाज़ों पर धरना देकर वहाँ पर एकत्रित छात्रों को झकझोरती थीं अरे ! यह शिक्षा तुम्हें दास बनाये रखने के लिए है। इस का उपार्जन किस लिए कर रहे हो ?

१६. ये स्त्रियाँ प्रातः घर छोड़कर अनेक स्थानों पर जातीं और सांयकाल थक कर वापस लौटतीं। बस इनकी यही दिनचर्या थी ।

१७. बन्धुजनों से हीन बालिका इन्दिरा सारा-सारा दिन अपने घर में अकेली रह कर अपना समय जैसे तैसे बड़े खिन्न मन से काटती थी।

१८. बढ़े हुए उत्साह वाली और मरदाने वस्त्र धारण करने वाली अपनी दादी, माता और दोनों फूफियों को देखकर यह कन्या भी वैसे ही वस्त्र पहनना चाहती ।

१९. अपने सब बन्धुजनों को खादी नाम से प्रसिद्ध साधारण कपड़े से बने वस्त्र पहने देखकर उसने भी उन्हें ही धारण करने का निश्चय किया।

२०. स्त्रियों ने मरदाना वेष धारण किया हुआ है—यह सचमुच ही लोगों के लिये प्रेरणाप्रद बात थी। इसलिये मैं एक स्वयंसेवक की तरह लगूँ अतः इसने मरदाना वेष धारण करने की इच्छा प्रकट की।

२१-२२ उस वेष को धारण कर, अत्यन्त प्रसन्न, अनेक प्रकार के अलौकिक गुणों से युक्त, बालिका होते हुए भी प्रौढ़ व्यक्तियों के समान बढ़े हुए मनोबल वाली, तीक्ष्ण-बुद्धि, चुस्त और तेजस्वी उस कन्या ने अपनी माता के साथ जहाँ चाहे जाना चाहा। पर बच्ची समझ कर उसकी माता को उसका अपने साथ जाना पसन्द नहीं था।

२३. इसलिए दुबली पतली, अत्यन्त दुखी पर दूरदर्शिनी वह कन्या ग्रीष्म काल के अत्यन्त लम्बे दिनों को अपने लम्बे चौड़े घर में ही बिताने लगी।

२४. जब कभी कभी वह जागरूक कन्या बहुत थक जाती तो अपने पिता के विशाल पुस्तकालय में चली जाती और वहाँ अपनी अवस्था के अनुसार अनेक ग्रन्थों का अध्ययन करती।

२५. ग्रन्थों के अध्ययन में लीन यह कन्या जब कुछ थोड़ी भी थकावट सी महसूस करती तो उसे दूर करने के लिए अपने मन को खेल में लगा देती।

# सातवां सर्ग

१. महात्मा गान्धी के साथ इस कुमारी का सम्पर्क कब हुआ—यह उसे याद नहीं। यह उसे बहुत दूर की सी घटना लगती है।

२. प्रयत्न करने पर भी वह शुभ क्षरण उसके स्मृति-पटल पर नहीं आता जबकि इस बालिका का लोगों के उपकार में रत, लोकनायक महात्मा गान्धी के साथ सम्पर्क हुआ।

३. बाल्यकाल में जब इन्दिरा चार वर्ष की थी तो अपने पिता के साथ साबरमती नाम से प्रसिद्ध अत्यन्त रमणीय आश्रम में गई।

४. और वहाँ महात्मा के मनमोहक वचनों से मोहित कोमलाङ्गी कन्या ने तनिक भी कष्ट का अनुभव न किया।

५. वह कन्या सुबह ही अपना बिस्तर छोड़ देती और (साबरमती) के किनारे दूसरे लोगों के साथ मिलकर प्रार्थना आदि के भजन गाती।

६. उस बच्ची ने आश्रम में निवास करने वाले तपस्वी लोगों को भोजन आदि पकाने, जमीन पर झाड़ू लगाने आदि के विविध कार्यों में व्यस्त देखा।

७, उन्हें देखकर प्रसन्नचित्त इन्दिरा ने सब कामों को स्वयं करने की इच्छा प्रकट की। निःसन्देह नवीनता के कारण कष्ट भी उसे मनोविनोद के साधन प्रतीत होते थे।

८. उस मनोहर आश्रम में आनन्दमय कुछ समय बिताकर इन्दिरा अपने पिता के साथ पृथिवी के अलङ्कारभूत अपने घर में लौट आई।

९. उस घर में पहुंच कर उस कन्या ने कुछ और ही देखा। उस समय स्वतन्त्रता-सङ्ग्राम दिन पर दिन बढ़ता जा रहा था।

१०. जो वस्तुएं यहाँ हमारे देश में पैदा होती हैं या बनती हैं हमें उन्हीं का भली प्रकार सेवन करना चाहिए और जो विदेशी वस्तुएं हैं उनका परित्याग कर देना चाहिए—उस समय लोगों में इसी प्रकार की विचारधारा पनप रही थी।

११. इसीलिए लोगों ने स्वयं विदेशी कपड़े अग्नि के अर्पण कर दिये और निमेष भर में उस प्रज्वलित अग्नि ने उन्हें भस्म कर दिया ।

१२. एक बार उस कन्या ने अपने घर के उद्यान की दीवार की दूसरी ओर रात्रि के समय कपड़ों के कारण तेज हुई उद्दीप्त आग देखी।

१३. आकाश को छूने वाली और अपने प्रकाश से सब दिशाओं को प्रकाशित करने वाली उस आग को देख उस सुन्दर कन्या को उसके पास जाने की प्रबल इच्छा हुई।

१४. वह जी भर कर उस आग के चारों ओर नाचना चाहती थी, पर हितैषी पिता ने सन्तति-स्नेह के कारण उसे अनुमति नहीं दी ।

१५. और कड़े शब्दों में उसे कहा—"जा, सो जा, देर मत कर समझदार लोगों के अनुसार बाल्यावस्था में समय पर सोना अच्छा होता है ।"

१६. पिता की बात सुन वह तुरन्त अपने बिस्तर पर चली गई। चूंकि उसकी इच्छा को रोक दिया गया था, इसलिये वह उदास हो गई।

१७. हाय ! मेरे पिता ने क्यों मेरी इस इच्छा को अंश मात्र में भी स्वीकार नहीं किया—इस प्रकार मन में उसे बहुत दुःख हुआ । (सच है) बच्चों को भी (ईश्वरदत्त) सूक्ष्म दृष्टि होती है।

१८. किन्तु पिता के प्रति उसका रोष बहुत समय तक टिका नहीं रहा। क्योंकि जिस प्रकार यह उसे बहुत अधिक प्यारी थी वह भी उसे बहुत अधिक प्यारा था।

१९. अस्तु। इसके पश्चात् इसका पिता जब कारागार में डाल दिया गया तो इसे बहुत दुःख हुआ और यह उंगलियों पर गिन कर दिन काटने लगी।

२०. उससे अलग होकर उसके पिता को भी क्षण भर के लिए चैन नहीं आता था भले ही पिता धैर्यवान् था पर पुत्री से वियुक्त होकर उसे शान्ति कैसे मिल सकती थी ।

२१. एक बार उसने जेल से अपनी पुत्री को पत्र लिखा और पूछा— "पुत्रि ! तुम्हें कलकत्ता नगर में स्थित चिड़ियाघर कैसा लगा।

२३. हे शुभे ! तुम्हारे मुखारविन्द को देखने के लिए उत्सुक मुझे मिलने के

लिए यहाँ मेरे पास आओ। चिरकाल से वाञ्छित तुम्हारे मिलन से बढ़कर मुझे और कुछ अभीष्ट नहीं है।"

२४. पिता के कहे के अनुसार वह जेल में पहुँची। उसे देखकर पिता ने अपने एक मित्र को उसके विषय में यह बात कही—

२५. "दुबली पतली होने और मुख की आभा पीले रंग की होने के कारण इन्दिरा अन्य चिन्तन से पराङ्मुख कर देने वाली मेरी विशेष मानसिक चिन्ता को बढ़ा रही है।"

२६. उसके मन में विचार उत्पन्न हुआ—इसकी शिक्षा कैसे होगी। यह सच है कि सुशिक्षित व्यक्ति ही लोगों की आंखों को प्रफुल्लित करते हैं।

२७. जनचित्ताकर्षक चरित्र वाले इसके पिता इसी प्रकार अपना समय बिताते रहे। इस प्रकार के लोग जनसाधारण की तरह शोक के वशीभूत नहीं होते।

